॥ श्रीः ॥

# महावाक्यरत्नावलिः

## उपदेशपञ्चदशी च

---

श्रीमत्परमहंस परिव्राजकाचार्य्य वासुदेवेन्द्रसरस्वती चरणकमल-
मकरन्द तृप्तस्वान्तचञ्चरीक श्रीरामचन्द्रेन्द्रसरस्वती सङ्गृहीते
शाखष्टोत्तर शतोपनिषदष्टोत्तर सहस्र वाक्यस्वरूपा

महावाक्य रत्नावलिः

तथा योग तप उपलब्ध निखिल निगमागम विज्ञान मैथिल
झोपाह्व श्रीसत्यनारायणशर्मभिर्विरचिता

उपदेशपञ्चदशी च

दरभङ्गा ( जिला ) मण्डलान्तर्गत चनौर ग्राम वास्तव्य मैथिल
श्रीत्रिलोकनाथ मिश्र विरचितया प्रभाख्यया टीकया
समलङ्कृता महावाक्य रत्नावलिः तथा नैष्ठिक
ब्रह्मचारि श्रीबलभद्रदासशर्म कृत सुबोधिन्या
टीकया समन्विता उपदेशपञ्चदशी च

ते च

श्री त्रिलोकनाथ मिश्रेण

प्रकाशिते


काश्यां

बी० एल्० पावगी द्वारा
रामघट्टे हितचिन्तक मुद्रणालये मुद्रापिते ।

प्रथमावृत्तिः १०००

# अथ वाक्य सूची ।



त्रिलोकनाथमिश्रस्य पचौरग्रामवासिनः ।
चित्रं मैथिलविप्रस्य त्रिंशद्वर्षवयोवत ॥
सन् १९०२ ई०

# ग्रन्थकारकृतसूचना ।

ग्रथ्यमानाया महावाक्यरत्नावल्याश्चतुर्वेदप्रविभक्तेशाद्यष्टोत्तरशतोपनिषत्सारसंग्रहतां प्रकटयितुं वृत्तमनुकीर्तयति । अथ खलु ऋग्वेदादिविभागेन वेदाश्चत्वार । तत्रैकविंशतिशाखा ऋच । नवाधिकशतशाखा यजुष ।सहस्रशाखा साम्न । पञ्चाशच्छाखा अथर्वणस्य । एकैकस्या शाखाया एकैकोपनिषत् । आहत्याशीतिसहितशताधिकसहस्रसंख्याका उपनिषद् 'तासु श्रीरामचन्द्रेण रामदूताय सारतरोपनिषदोऽष्टोत्तरशतसङ्ख्याका उपदिष्टा । तथाच मुक्तिकोपनिषत्स्थाष्टोत्तरशतोपनिषन्नामश्लोका लिख्यन्ते । ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरि । ऐतरेय च छान्दोग्य बृहदारण्यक तथा ॥ १ ॥ ब्रह्म कैवल्यजाबाली श्वेताश्वो हंस आरुणि । गर्भो नारायणो हंसो बिन्दुनादशिर शिखा ॥ २ ॥ मैत्रायणी कौषितकी बृहज्जाबालतापिनी ॥ कालाग्निरुद्रमैत्रेयी सुबालक्षुरिमन्त्रिका ॥ ३ ॥ सर्वसार निरालम्ब रहस्य वज्रसूचिकम् । तेजोनादध्यानविद्यायोगतत्त्वात्मबोधकम् ॥ ४ ॥ परिव्राट् त्रिशिखी सीता चूडा निर्वाणमण्डलम् ॥ दक्षिणा शरभ स्कन्द महानारायणाद्वयम् ॥ ५ ॥ रहस्य रामतपन वासुदेव च मुद्गलम् । शाण्डिल्य पैङ्गल भिक्षुमहच्छारीरकशिखा ॥ ६ ॥ तुरीयातीत च सन्यास परिव्राजाक्षमालिका । अव्यक्तैकाक्षर पूर्णा सूर्याक्ष्यध्यात्मकुण्डिका ॥ ७ ॥ सावित्र्यात्मा पाशुपत पर ब्रह्मावधूतकम् । त्रिपुरातपन देवी त्रिपुराकठभावना ॥ ८ ॥ हृदय कुण्डली भस्म रुद्राक्षगणदर्शनम् । तारसारमहावाक्यपञ्चब्रह्माग्निहोत्रकम् ॥ ९ ॥ गोपालतपन कृष्ण याज्ञवल्क्य वराहकम् । शाट्यायनी हयग्रीव दत्तात्रेय च गारुडम् ॥ १० ॥ कलिजाबालिसौभाग्यरहस्यऋचमुक्तिकेति ॥ ( ईशाद्यष्टोत्तरशतोपनिषदा शाखाभेद दर्शयति ) तत्र दशोपनिषद ऋग्वेद

गताः । शुक्लकृष्णभेदेन यजुष एकपञ्चाशत् । तत्र शुक्लयजुष एकोनविंशतिः । कृष्णयजुषो द्वात्रिंशत् । साम्नः षोडश । अथर्वणस्यैकत्रिंशत् । आहत्याष्टोत्तरशतम् । ( अथासामीशाद्यष्टोत्तरशतोपनिषदां पूर्वाचार्यप्रकाशितत्वं दर्शयति ) तत्र गौडपादाचार्यैर्माण्डूक्योपनिषद् व्याख्याता । श्रीमच्छङ्करभगवत्पादाचार्यैर्दशोपनिषदः । पञ्च रुद्र-नृसिंहतापिनी च शङ्करानन्दैः । सदाशिवब्रह्मेन्द्रैः स्वयंप्रकाशानन्दाद्यैश्च द्वात्रिंशोपनिषदः । विद्यारण्याचार्यैरष्टोत्तरशतोपनिषदो व्याख्याता ।(महावाक्यरत्नावल्याख्यायिकायास्त्रयोदशधा विभागं दर्शयति) प्रकृते तु । रामचन्द्रेणोपदिष्टे रामदूताय धीमते । ईशाद्यष्टोत्तरशतोपनिषद्यादसां पतौ ॥ निमज्ज्यान महावाक्यरत्नावलिरदाहृता । विभाव्यते विभागेन सा त्रयोदशधा पुनः ॥ ( अष्टस्वरूपवाक्यानां स्वरूपधात्वमात्रत्वेन एकत्वविवक्षया निरुक्तत्रयोदशधा विभागसंगतिः ) तत्रादौ विधिवाक्यानि बन्धमोक्षपराणि च । अविद्याद्ध्येयवाक्यानि जगन्मिथ्यापराणि च ॥ तथोपदेशवाक्यानि जीवेशैक्यपराणि च । ब्रह्मविन्मननाख्यानि जीवन्मुक्तिपराणि च ॥ ब्रह्मानुभूतिरूपाणि तत्समाधिपराणि च । अष्टस्वरूपवाक्यानि फलवाक्यान्यनन्तरम् ॥ विदेहमुक्तिवाक्यानि लिख्यन्तेऽन्विष्य तत्क्रमात् । ( महावाक्यरत्नावल्यां यथोक्ताधिकारिणं दर्शयति ) यः स्वाश्रमाचाररतः परिव्राड्विजितेन्द्रियः । सोऽधिकारी महावाक्यरत्नावल्यां न चापरः ॥ ( शान्तिपाठविधिं दर्शयति ) वाक् पूर्णसहनाप्यायं भद्रंकर्णेभिरेव च । पञ्च शान्तीः पठित्वाऽऽदौ पठेद्वाक्यान्यनन्तरम् ॥

ॐ श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरु-
श्रीरामचन्द्राय नमः ।

यो विध्यादिविदेहान्तमहावाक्यार्थविग्रहः ।
श्रीरामचन्द्ररूपाय तस्मै भूमात्मने नमः ॥ १ ॥
यः पूज्यो यतिभिः स्वधर्मनिरतैर्ध्यायन्ति यं योगिनो
येनात्तं निगमान्तवेद्यमनिशं यस्मै हविर्दीयते ।
यस्मात् स्थावरजङ्गमं समभवद्यस्यांशमात्रो वरो
*यस्मिन् लीनमिदं प्रणौमि सततं तं वासुदेवं गुरुम् ॥ २॥*

यत्सत्त्वात् सदिवाधमात्यसदिदं यज्ज्ञानतो लीयते
तद् ब्रह्मैव भवामि यस्य कृपया वन्दे गुरुं मैथिलम् ।
तं नानात्वविकल्पनाविरहितं श्रीसत्यनारायणं
*ह्योपाह्वं समवाप्तनिश्चलपदं शुश्रूषुमद्भ्रमदम् ॥ १ ॥*
वन्दे स्वस्य सहोदरां सकरुणां लक्ष्मीवतीं श्रीमतीं
श्रीलक्ष्मीश्वरसिंहमैथिलमहाराजस्य पूर्वां प्रियाम् ।
यत्पादाब्जमुपाश्रितस्य सततं पुष्टिं वपुर्मे गतं ।
सन्तुष्टिं समुपागतोऽस्मि करुणादृष्ट्या च यस्याः पराम् ॥२॥

सर्वं ब्रह्मेत्युपक्रम्य वैदेही मुक्त एव स इत्यन्तानां विध्यादिविदे-
हमुपस्त्यन्तमहावाक्यानामर्थो निष्प्रतियोगिकब्रह्ममात्रावस्थानलक्षण-
*विदेहकैवल्यं तदेव विग्रहो यस्य स तथोक्तो योऽस्ति तस्मै व्याप-*
काय श्रीरामचन्द्ररूपाय ब्रह्मणे नमः ॥ १ ॥

यच्छन्दोत्तरसप्तविभक्तिभिरस्मद्गुपदेष्टुर्ब्रह्मविद्वरिष्ठत्वेन सर्वेशे-
श्वरत्वं प्रत्यगभिन्नब्रह्मत्वं *निष्प्रतियोगिकब्रह्मस्वरूपत्वं* च स्वतः
सिद्धमित्यत आह [illegible] इति– स्वधर्मनिरतैः स्वाश्रमाचारसम्पन्नैर्य-
तिभिः यः पूज्यः । यं योगिनो ध्यायन्ति । येन निगमान्तवेद्य ब्रह्म स्व-
स्वरूपमित्यात्तं ज्ञातमित्यर्थः । *यस्मै वैश्वानररूपायानिश हविर्दीयते ।*
यस्मात् स्थावरजङ्गमात्मकं जगत् समभवत् । यस्यांशमात्रोऽवरो जीव-

नत्वा श्रीवासुदेवेन्द्रपादपङ्केरुहद्वयम् ।
ग्रथ्यते वै महावाक्यरत्नावलिरियं मया ॥ ३ ॥

त्रिलोकनाथमिश्रेण चनौरग्रामवासिना ।
विरच्यते प्रभानाम्नी टीका जिज्ञासुसिद्धये ॥ ३ ॥

समूहो भवति "ममैवांशो जीवलोके जीवभूतः सनातन" इति स्मृतेः । यस्मिन् प्रत्यगभिन्ने ब्रह्मणि इदं जगत् लीनम् । तं वासुदेवं गुरुं सततं प्रणौमि श्रीगुरुचरणारविन्दमनुसन्दधामीत्यर्थः ॥ २ ॥

ग्रन्थकारः गुरुनमस्कारपूर्वकं ग्रन्थग्रन्थनं प्रतिजानीते नत्वेति–श्रीवासुदेवश्चासौ इन्द्र ऐश्वर्यसम्पन्नः श्रीवासुदेवेन्द्रः तस्य पादपङ्केरुहद्वयं चरणाम्बुजयुग्मं नत्वा मया वै इति निश्चयेन इयं महावाक्यरत्नावलिः तदभिधानो ग्रन्थो ग्रथ्यते संगृह्यत इत्यर्थः ॥ ३ ॥

वाक् पूर्ण सहना-प्यायं भद्रं कर्णेभिरेव च ।
पञ्च शान्तीः पठित्वाऽऽदौ पठेद्वाक्यान्यतन्तरम् ॥

इत्युक्तं-तास्च-

वाङ् मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणीस्थः। श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रावसंदधाम्यृतं वदिष्यामि सत्य वदिष्यामि तन्मामवतु तद्वक्तारमवतु अवतु मामवतु वक्तारमवतु वक्तारम् ॐ शान्तिः शान्तिः शान्तिः॥१॥

---

पञ्चशान्तिप्रथममन्त्रार्थं प्रकटयति वागित्यादिना समाहितदशायां मे मम वागिन्द्रियप्रवृत्तिर्मनसि प्रतिष्ठिता "यच्छेद्वाङ्मनसी प्राज्ञ" इति श्रुते । व्यावहारिकदशायांतु मे मनोऽन्तःकरण वाचि वागादिकरणसमूहे प्रतिष्ठितम् । वागादिव्यापृतेरन्तःकरणाधीनत्वात् । "अन्यत्रमना अभूव नादर्शमित्यादि श्रुते " मे मम वाचि मनसि च हे वृहत्यात्मकप्राण त्वमेधि प्रकाशरूपेण सदा सन्निधिं कुरु । आवि शब्देन स्वप्रकाश ब्रह्मोच्यते प्रज्ञानशब्देन व्यवहृतत्वात् तस्याविर्भूतरूपत्वमतो हे आवि आविर्भूत मे मनसि अखण्डाकारवृत्तिरूपे आवि स्वातिरिक्तानात्मतिमिरग्रासादात्ममात्रज्योति स्वरूपेणैधि स्वातिरिक्तानात्मविस्मरणपूर्वक सन्निधि कुरु । हे वाङ्मनसे मेमदर्थं वेदस्य यथोक्ततत्वज्ञानप्रतिपादकस्य ग्रन्थस्य आणीस्थ आनयनसमर्थे भवतम् । मे मया देशिकमुखत श्रुतमधीत कदापि मा प्रहासी । उपदेष्टृमुखादवगतार्थजातस्य विस्मर माकार्षीरित्यर्थ । अनेन मयाऽधीतेन परापरविद्याजातेन अहोरात्रात् अहोरात्रसदा त्वां सन्दधामि अपररूपेण पररूपेण वा त्वमहमस्मीति अनुसन्धान करोमीत्यर्थ । हे प्राज्ञात्मन् यथाशास्त्रकर्त्तव्यार्थभूत व्यावहारिकसत्य वा वदिष्यामि । वागादिकरणग्रामतो यथावद्ग्राह्य सत्य तद्गतहेयांशापाये पारमार्थिकसत्यस्वरूप वा त्वा वदिष्यामि तत्परमपर वा ब्रह्म परापरविद्यासयोजनेन विद्यार्थिन मामवतु । तदेव पुनर्ब्रह्म विद्यावक्तारमाचार्यमवतु । अवतु मामवतु वक्तारमिति पुनर्वचन मादरार्थम् । परापरविद्याप्राप्त्यन्तरायीभूताध्यात्मिकादितापत्रय

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॐ शान्तिः शान्तिः शान्तिः॥२॥

ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै ॐ शान्तिः शान्तिः शान्तिः ॥ ३ ॥

ॐ आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बल-

---

निरसनाय शान्तिरिति वचनत्रयम् । इयं शान्तिः विद्यारम्भावसानयोः कार्या। कृतायामस्यां विद्या प्रसीदतीति सिद्धम्। विद्याप्रादुर्भावसमकालमयं विद्वान् कृतार्थो भवतीत्यर्थः ॥ १ ॥

यत् देशतः कालतो वस्तुतः परिच्छेदरहितं तत्पूर्णं यत् अद इति परोक्षसूचकसर्वनाम तदपि पूर्णं निरुपाधिकत्वात्। यत् इदंशब्दवाच्यं व्यवहारापन्नं तदपि पूर्णं सोपाधिकत्वेन व्याप्तत्वात् यत् अदःशब्दवाच्यं कारणभावापन्नं पूर्णं ब्रह्म तदेवेदंशब्दवाच्यं कार्योपाध्यवच्छिन्नमिव भाति। वस्तुतः कार्यकारणभावापन्नयोरैक्यं पूर्णत्वं च वेद्यम्। अनयोर्मध्ये प्रपञ्चारोपाधिकरणत्वेन पूर्णात् इदंशब्दवाच्यात् प्रपञ्चापवादाधिकरणतया पूर्णमदःशब्दवाच्यं ब्रह्म उदच्यते उत्कृष्टं भवतीत्यर्थः। कार्यकारणात्मना पूर्णस्य वस्तुनः कार्यकारणसम्बन्धशून्यमहं ब्रह्मास्मीत्येतावन्मात्रं पूर्णमादाय विदित्वा तत्कालं कार्यकारणसम्बन्धसत्यासत्त्वविभ्रमापगमो भवतीति पूर्णं ब्रह्म स्वमात्रमवशिष्यते ॥ २ ॥

औपनिषदं ब्रह्म नौ शिष्याचार्यौ सहैवावतु। सह नौ विद्याफलं भुनक्तु भोजयतु। सह विद्यानिमित्तं वीर्यं सामर्थ्यं करवावहै सम्पादयावहै। नावावयोरधीतं ग्रन्थजातं तेजस्वि ब्रह्मज्ञानयोग्यमस्तु। तत्राध्ययने यदि प्रमादात् कश्चिद्विद्वेषो भवेत् तदा स माभूदिति तत्क्षमापनायेयमाशीःप्रार्थना मा विद्विषावहै इति मैव परस्परविद्वेषं जनयावहै। शान्तिरित्युक्तार्थम् ॥ ३ ॥

व्यष्टिसमष्टिप्रपञ्चारोपापवादाधारविराड्हिरण्यगर्भेश्वरतुर्या मुमुक्षोर्ममाङ्गानि करचरणादीनि स्वध्यानानुकूलतयाऽऽप्यायन्तु चिन्मुद्रासिद्धासनादिव्यापृतानि कुर्वन्तु। तत्प्रसादान्मदीयवाक् प्राणश्चक्षुः

मिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मे अस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॐ शान्तिः शान्तिः शान्तिः ॥ ४ ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेम देवहितं यदायुः स्वस्ति न इन्द्रो

---

श्रोत्रमित्युपलक्षितकर्मज्ञानेन्द्रियाणि प्राणपञ्चकमपि पराक्प्रवृत्तिं विहाय प्रत्यक्प्रवणतया अथो यथाबलं सर्ववेदान्तश्रवणमनननिदिध्यासनपर्यवसन्नानि भवन्तु । यदीशावास्योत्तरशतोपनिषत्प्रतिपाद्यं तदौपनिषदं ब्रह्मैव सर्वम् "सर्वं खल्विदं ब्रह्म" इति श्रुतेः । ब्रह्मातिरिक्तास्तित्वधिया अहं ब्रह्म मा निराकुर्यां ब्रह्मैवासीत्यनुसन्धानं कुर्यामित्यर्थः । ब्रह्मापि प्रत्यग्भावमापन्नं मा मा निराकरोत् आवयोरहं ब्रह्मास्मि ब्रह्मैवाहमस्मीत्यनिराकरणमस्त्वनिराकरणं मेऽस्तु । अतद्व्यनात्मापह्नवसिद्धे तदात्मनि निरते तद्भावमापन्ने मयि ये उपनिषत्सु प्रशंसिता धर्माः शमादयस्त्यक्तकामादयः सच्चिदानन्दादयश्च विद्यन्ते त एव मयि सन्तु । आवृत्तिरादरार्था । शान्तिरित्युक्तार्थम् ॥ ४ ॥

हे निराडादयो देवाः । मुमुक्षवो वयं मुमुक्षूणां बहुत्वाद्बहुवचनम् । भवत्प्रसादतः कर्णेभिरिति छान्दसम् । कर्णैः भद्रं निर्विशेषप्रतिपादकं वेदान्तजातं शृणुयाम सर्वदोषशान्त्यर्थं वेदान्तश्रवणं कुर्म इत्यर्थः । केवलश्रवणतः किं स्यादित्यत आह भद्रमिति—यथाशास्त्रं वेदान्तश्रवणतो यजत्रा ध्यानयजनशीला वयम् अक्षभिः प्रत्यग्भावापन्नेन्द्रियैः भद्रं तुरीयातीतं पश्येम पश्याम । अल्पायुषा कथं तत्सिद्धिरित्याह स्थिरैरिति—तत्तदङ्गाभिमानीन्द्राधिदेवताप्रसादतः स्वस्वविषयव्यापृतिशून्यैस्तनूभिः सूक्ष्मवस्तुगोचरैरङ्गैर्विशिष्टा वयं तुष्टुवांसः युष्मदीयां स्तुतिं कृतवन्तः देवहितं देवेन प्रजापतिना हितं समर्पितं यन्नैरुज्यादिगुणविशिष्टमायुश्चिरजीवित्वं तद्व्यशेम विशेषेण प्राप्नुयाम

वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॐ शान्तिः शान्तिः शान्तिः ॥ ५ ॥

इत्यर्थः। मन्दबुद्ध्यनुकम्पया प्रकारान्तरेण पुनः प्रार्थ्यते स्वस्तीति–इन्द्रस्त्रिलोकीपतिः वृद्धश्रवाः वृद्धैर्महात्मभिः सदा पुराणादिषु श्रूयते इति तथोक्तः स नोऽस्माकं स्वस्ति दधातु ब्रह्मज्ञानार्थं क्षेमं सम्पादयतु। विश्ववेदाः सर्वज्ञः पूषा सूर्यः नोऽस्माकं स्वस्ति दधातु ब्रह्ममात्रध्यानानुकूलं मनो भवत्वित्यनुगृह्णातु। अरिष्टा अकुण्ठिता नेमिर्गतिर्यस्य स तार्क्ष्यः गरुडः नोऽस्माकं ब्रह्मैकतानं मनः स्वस्ति स्यादित्यनुगृह्णातु। बृहस्पतिः सुराचार्यो नोऽस्माकमिन्द्रियजातं ब्रह्ममात्रपर्यवसानं दधातु करोत्वित्यर्थः ॥ ५ ॥



श्रीदुर्गामाधवगणेशाः पान्तु ।

# महावाक्यरत्नावल्याम् ।

## अथ साद्धान्तिकविधिवाक्यानि ।

ॐ सर्वं खल्विदं ब्रह्म तज्जलानीति शान्त उपासीत ॥ १ ॥
आत्मानमेवावेदहं ब्रह्मास्मीति ॥ २ ॥
आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ॥३॥
महत्पदं ज्ञात्वा वृक्षमूले वसेत् ॥ ४ ॥
सच्चिदानन्दात्मानमद्वितीयं ब्रह्म भावयेत् ॥ ५ ॥

---

अद्धान्तिकेन सहितानि तानि च विधिवाक्यानीति समासः अद्धान्तिकत्वञ्च क्रमकालिकविच्छेदत्वम् तच्च एष्वेव विधिवाक्येषु न स्वर्गकामो ज्योतिष्टोमेन यजेतेत्यस्मिन्विधिवाक्ये इति धमान्तपाठिभिर्व्युत्पन्नैर्वैदिकैरवगन्तव्यम् । अविधेयब्रह्मप्रापकविधिच्छायापन्नवाक्यानि कानीत्याह सर्वमित्यादिना—इदं प्रपञ्चजातं सर्वं ब्रह्मैव खलु कुतः प्रपञ्चजातस्य तज्जत्वात् तस्माज्जातत्वात् तत्स्थत्वात् तत्र स्थितत्वात् तल्लत्वात् तत्र लयापन्नत्वादिति शान्तः समाहितः सन् उपासीत सदानुसन्धानं कुर्यादित्यर्थः ॥ १ ॥

मुमुक्षुर्गुरुमुखात् आत्मानमेव स्वमेव अहं ब्रह्मास्मीति अवेत् ज्ञानवानित्यर्थः ॥ २ ॥

अरे इति सम्बोधनम् । परमात्मा वा एव स्वमिति द्रष्टव्यः तदुपायत्वेन सर्ववेदान्तार्थः श्रोतव्यो युक्तिभिर्मन्तव्यः प्रत्यग्भावमापन्नबुद्ध्या ब्रह्मैवाहमिति निदिध्यासितव्यश्च ॥ ३ ॥

महत्पदं ब्रह्म ज्ञात्वा वृक्षमूले वसेत् ॥ ४ ॥

आत्मानं जीवात्मानं । सद्रूपं चिद्रूपम् आनन्दरूपम् अद्वितीयं ब्रह्म ब्रह्मत्वेन भावयेत् ॥ ५ ॥

अहं ब्रह्मास्मीत्यनुसन्धानं कुर्यात् ॥ ६ ॥

स तज्ज्ञो बालोन्मत्तपिशाचवज्जडवृत्त्या लोकमाचरेत् ॥ ७ ॥

ब्राह्मणः समाहितो भूत्वा तत्त्वंपदैक्यमेव सदा कुर्यात् ॥ ८ ॥

सर्वत्राद्वैतब्रह्मबुद्धिं कुर्यात् ॥ ९ ॥

आशाम्बरो न नमस्कारो न स्वाहाकारो न स्वधाकारो न निन्दास्तुतिर्यादृच्छिको भवेत् ॥ १० ॥

सर्वतः स्वरूपमेव पश्यन् जीवन्मुक्तिमवाप्य प्रारब्धप्रतिभासनाशपर्यन्तं स्वरूपानुसन्धानेन वसेत् ॥ ११ ॥

स्वरूपानुसन्धानं विनाऽन्यथाचारपरो न भवेत् ॥ १२ ॥

---

अहं ब्रह्मास्मीति भावयेत् ॥ ६ ॥

स साधकः तज्ज्ञो ब्रह्मवित् बालोन्मत्तपिशाचवत् जडवृत्त्या वा लोकं लोकव्यवहारम् आचरेत् ॥ ७ ॥

ब्राह्मणः ब्रह्मवित् समाहित एकाग्रचित्तो भूत्वा तत्त्वंपदलक्ष्यार्थयोर्जीवात्मपरमात्मनोरैक्यमभेदबुद्धिमेव कुर्यात् ॥ ८ ॥

अज्ञानदृष्ट्या द्वैतप्रपञ्चे सर्वत्राद्वैतब्रह्मबुद्धिं कुर्यात् ॥ ९ ॥

ब्रह्मवित् मानापमानास्पददेहाद्यात्मीयाभिमत्यभावाद्दिगम्बरो भूत्वा ज्येष्ठकनिष्ठफललाभाभावान्नमस्काररहितः स्वाहास्वधायपद्कारगोचरकर्मसामान्यस्य संन्यस्तत्वात् स्वाहास्वधाकाररहितः दुश्चरित्रसच्चरित्राभावात् निन्दास्तुतिरहितः प्रवृत्तिनिवृत्तिव्यावृत्तीनामभावात् यादृच्छिको भवेत् स्वेच्छाचारो भवेदित्यर्थः ॥ १० ॥

सर्वतः सर्वत्र स्वस्वरूपमेव पश्यन् जीवन्मुक्तिमवाप्य प्रारब्धकर्मनाशपर्यन्तं स्वरूपानुसन्धानेन स्वस्वरूपानुचिन्तनेन वसेत् कालं नयेदित्यर्थः ॥ ११ ॥

ब्रह्मवित् कदाचिदपि स्वरूपानुसन्धानं विना स्वस्वरूपानुचिन्तनं विना[अन्यथाचारपरो न भवेत् कार्यान्तरानुपक्तो न भवेदित्यर्थः ॥ १२ ॥

वेदान्तश्रवणं कुर्वन् योगं समारभेत ॥ १३ ॥
आकुञ्चनेन कुण्डलिन्याः कपाटमुद्घाट्य मोक्षद्वारं विभेदयेत् ॥१४॥
यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ॥ १५ ॥
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥ १६ ॥
आत्मानञ्चेद्विजानीयादयमस्मीति पूरुषः ॥ १७ ॥
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ १८ ॥
तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥ १९ ॥
नानुध्यायाद्बहूञ्छब्दान् वाचो विग्लापनं हि तत् ॥ २० ॥

---

गुरोः सकाशात् वेदान्तश्रवणं कुर्वन् योगं समारभेत अभ्यसेदित्यर्थः ॥ १३ ॥

अपानाकुञ्चनेनाभिवर्द्धितप्राणाग्निसन्तप्तकुण्डलिनीशक्त्या ग्रन्थित्रयाऽन्वितसुषुम्णाकपाटमुद्घाट्य तद्गतमोक्षद्वारं वैवस्वतनाडिकां विभेदयेत् तद्गतचिदाकाशपर्यवसन्नो भवेदित्यर्थः ॥ १४ ॥

प्राज्ञो ब्रह्मवित् वागादीनि इन्द्रियाणि मनसी मनसि दीर्घस्त्वार्षः यच्छेत् मनोरूपतया विलापयेत् तन्मनो ज्ञानरूपे आत्मनि यच्छेत् विलापयेदित्यर्थः ॥ १५ ॥

तज्ज्ञानं निश्चयात्मकबुद्धिं महत्यात्मनि अव्यक्ते नियच्छेत् तदव्यक्तं शान्त आत्मनि निर्विशेषपरमात्मनि यच्छेत् ॥ १६ ॥

पुरुषः साधकः आत्मानम् अयं शान्त आत्मास्मीति विजानीयाच्चेत् किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् कृच्छ्रचान्द्रायणादिना शोषयेत् किमर्थं वा पोषयेत् देहेन्द्रियादि सम्पाद्य ज्ञानफलस्यासादितत्वादित्यर्थः ॥ १७ ॥ १८ ॥

ब्राह्मणो ब्रह्मवित् धीरो बुद्धिमान् तमेव परमात्मानं विज्ञाय प्रज्ञां निष्ठां कुर्वीत ॥ १९ ॥

उक्तनिष्ठातिरेकेण बहून् भेदप्रतिपादकान् शब्दान् ग्रन्थान् नानुध्यायात् न पठेत् तत् पठनं हि वाचो विग्लापनं कण्ठशोषजनकमित्यर्थः ॥ २० ॥

यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते ॥ २१ ॥
अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ॥ २२ ॥
चित्तमेव हि संसारस्तत्प्रयत्नेन शोधयेत् ॥ २३ ॥
दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत् ॥ २४ ॥
मायाकार्यमिदं भेदमस्तिचेद्ब्रह्मभावनम् ॥ २५ ॥
देहोऽहमिति दुःखं चेद्ब्रह्माहमिति निश्चयः ॥ २६ ॥
हृदयग्रन्थिरस्ति चेच्छेद्येद्ब्रह्मचक्रकम् ॥ २७ ॥
संशये समनुप्राप्ते ब्रह्मनिश्चयमाप्नुयात् ॥ २८ ॥
विज्ञेयोऽक्षरतन्मात्रं जीवितश्चापि चञ्चलम् ॥ २९ ॥

---

यतो निर्विषयस्य सङ्कल्पादिवृत्तिरहितस्यास्य मनसो मुक्तिर्ब्रह्ममात्रावशेषलक्षणा इष्यते ॥ २१ ॥

अतो नित्यं प्रतिदिनं मुमुक्षुणा निर्विषयं निःसङ्कल्पं मनः कार्यम् ॥ २२ ॥

चित्तमेव संसारः संसारहेतुः तत्प्रयत्नेन शोधयेत् ॥ २३ ॥

दृश्यम् अनन्तकोटिब्रह्माण्डजातं ब्रह्माकारेण ब्रह्मातिरिक्तं नास्तीत्याकारेण अदृश्यतां नीत्वा स्वस्वरूपं चिन्तयेत् ॥ २४ ॥

अयं प्रकारः यस्य तद् इदं भेदं भेदमापन्नत्वात् नानारूपं जगत् मायाकार्यमस्ति चेत् यदि बुद्ध्यते तदा ब्रह्मभावनं ब्रह्मेति भावनया तन्नानात्मतां त्यजेत् ॥ २५ ॥

देहोऽस्मीति वृत्तिर्दुःखरूपा चेत् तां विहाय ब्रह्माऽहमिति निश्चयः कार्यः ॥ २६ ॥

हृदयग्रन्थिरज्ञानग्रन्थिरस्तिचेद् ब्रह्मचक्रं ज्ञानरूपचक्रमादाय तच्छेदनं कुर्यात् ॥ २७ ॥

अहं ब्रह्म न वेति संशये समुदिते ब्रह्मनिश्चयं ब्रह्मैवाऽहमस्मीति निश्चयमाप्नुयात् ॥ २८ ॥

जीवितं चापि चञ्चलं जीवनमस्थिरमतो ऽक्षरतन्मात्रं ब्रह्म विज्ञेयं मुमुक्षुभिः ॥ २९ ॥

विहाय शास्त्रजालानि यत्सत्यं तदुपास्यताम् ॥ ३० ॥
यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क्व भोगभूः ॥ ३१ ॥
स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ॥ ३२॥
चित्तं कारणमर्थानां तस्मिन्सति जगत्त्रयम् ॥ ३३ ॥
तस्मिन्क्षीणे जगत्क्षीणं तच्चिकित्स्यं प्रयत्नतः ॥ ३४ ॥
सुप्तेरुत्थाय सुप्त्यन्तं ब्रह्मैकं प्रविचिन्त्यताम् ॥ ३५ ॥
गच्छँस्तिष्ठन्नुपविशञ्छयानो वाऽन्यथाऽपि वा ॥ ३६ ॥
यथेच्छया वसेद्विद्वानात्मारामः सदा मुनिः ॥ ३७ ॥
ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः ॥ ३८ ॥
आत्मानमात्मना साक्षाद्ब्रह्मबुद्ध्यासुनिश्चलम् ॥ ३९ ॥

---

शास्त्रजालानि अनेकशास्त्राभ्यास विहाय यत् सत्य तदेव ब्रह्मेत्यु-पास्यताम् ॥ ३० ॥

निस्त्रीकस्य स्त्रीरहितस्य [illegible] भोगभूर्नास्ति भोगभूमिरिति भाव ॥३१॥

स्त्रीपरित्यागेनैव जगत् परित्यक्त भवति यत स्त्रियो हि मूल जगताम् । तत्त्यागेन सुखी जीवन्मुक्तो भवतीति भाव ॥ ३२ ॥

अर्थानां विषयाणां कारण कल्पक चित्त तस्मिन् सति जगत्त्रय भासते ॥ ३३ ॥

तस्मिन् चित्ते क्षीणे नष्टे जगत् क्षीण भवति तच्चिकित्स्य प्रयत्नत तच्चित्तक्षयोपाय एव विधेय इति भाव. ॥ ३४ ॥

सुप्तेरुत्थाय पुन सुप्त्यन्तमेक ब्रह्म प्रविचिन्त्यताम् ॥ ३५ ॥

ब्रह्मवित् गच्छन् तिष्ठन् उपविशन् वा शयानश्शयनमुद्रया स्थित । अन्यथापि वा उक्तक्रियान्तरमनुतिष्ठन् ब्रह्मानुसन्धान कुर्यात् ॥ ३६ ॥

आत्मन्येवारमते इत्यात्मारामोमुनिर्विद्वान् यथेच्छया विधिनिषेधराहित्येन ब्रह्मैवास्मीति चिन्तयन् सदा वसेत् ॥ ३७ ॥

यतते इति यतिर्यत्नशीलोमुमुक्षु नित्य कालत्रयाबाधित ब्रह्मस्वरूप ज्योतिर्लिङ्ग भ्रुवोर्मध्ये सदा सर्वदा ध्यायेदित्यर्थ ॥ ३८ ॥

ज्ञानी आत्मना समाहितमनसा आत्मान जीव सुनिश्चल निर्विशे

देहजात्यादिसम्बन्धान् वर्णाश्रमसमन्वितान् ॥ ४० ॥
वेदशास्त्रपुराणादि पदपांसुमिव त्यजेत् ॥ ४१ ॥
एकाकी निःस्पृहस्तिष्ठेन्नहि केन सहालपेत् ॥ ४२ ॥
दद्यान्नारायणेत्येवं प्रतिवाक्यं सदा यतिः ॥ ४३ ॥
मुनिः कौपीनवासाः स्यान्नग्नो वा ध्यानतत्परः ॥ ४४ ॥
अध्यात्मरतिरासीनो निरपेक्षो निराशिषः ॥ ४५ ॥
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥ ४६ ॥
सन्दिग्धः सर्वभूतानां वर्णाश्रमविवर्जितः ॥ ४७ ॥
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ॥ ४८ ॥
यद्यत्पश्यति चक्षुर्भ्यां तत्तदात्मेति भावयेत् ॥ ४९ ॥

---

य ब्रह्मसाक्षाद्बुद्धा वर्णाश्रमसमन्वितान् देहजात्यादिसम्बन्धान् वेदशास्त्रपुराणादि च पदपांसुमिव पादलग्नधूलिमिव त्यजेत् ॥ ३९-४१ ॥

यति सर्वत्र निःस्पृह एकाकी तिष्ठेत् नहि केन सह ब्रह्मवार्त्तातिरिक्तवार्त्तालाप कुर्यात् ॥ ४२ ॥

यति तत्तत्कार्यानुरोधेन सत्यपि प्रश्ने नारायणेत्येव प्रतिवाक्य सदा दद्यात् ॥ ४३ ॥

ध्यानतत्परो मुनि कौपीनवासा स्यान्नग्नो वा ॥ ४४ ॥

आत्मानमधि कृत्य रमते इति अध्यात्मरति स्वे महिम्न्यासीन विषयेच्छारहित निराशिष निर्गतसङ्कल्प विचरेदित्युत्तरेण सम्बन्ध ॥ ४५ ॥

इहास्मिन् लोके निर्विशेषब्रह्ममात्रसुखार्थी आत्मनैव सहायेन एकाकी विचरेत् ॥ ४६ ॥

वर्णाश्रमाचारविवर्जितो यति सर्वमनुष्याणामयं ब्राह्मणो वा नवेत्यादिसन्दिग्धवेष ॥ ४७ ॥

सर्वथा सन्यस्तसङ्कल्पादिवृत्तिस्वरूपो मुनिरन्धवत् जडवत् मूकवच्च महीं चरेत् ॥ ४८ ॥

यद्यच्छृणोति कर्णाभ्यां तत्तदात्मेति भावयेत् ॥ ५० ॥
लभते नासया यद्यत्तत्तदात्मेति भावयेत् ॥ ५१ ॥
जिह्वया यद्रसं ह्यत्ति तत्तदात्मेति भावयेत् ॥ ५२ ॥
त्वचा यद्यत्स्पृशेद्योगी तत्तदात्मेति भावयेत् ॥ ५३ ॥
दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत् ॥ ५४ ॥
द्रष्टृदर्शनदृश्यानां विरामो यत्र वा भवेत् ॥ ५५ ॥
दृष्टिस्तत्रैव कर्तव्या न नासाग्रावलोकनी ॥ ५६ ॥
देवाग्न्यगारे तरुमूले गुहायां वसेदसङ्गोऽलक्षितशीलवृत्तः ॥५७॥
निरिन्धनं ज्योतिरिवोपशान्तो न चोद्विजेदुद्विजेद्यत्र कुत्र ॥५८॥
शान्तो दान्त उपरतस्तितिक्षुर्योऽनूचानो ह्यभिजज्ञौ ब्रह्मसमानः ॥५९॥

---

तत् तदात्मेति भावयेत् ॥ स्वातिरेकेण सविषयचक्षुरादिकरणज्ञान च नास्तीति भाव । वक्ष्यमाणवाक्यानामप्येतदेव तात्पर्यम् ॥४९॥५३॥

ब्रह्मातिरिक्तं न किञ्चिदस्तीति दृष्टिं ज्ञानमयीं सम्यग्ज्ञानरूपा कृत्वा परिदृश्यमानजगत् ब्रह्ममयं ब्रह्ममात्रं पश्येत् भावयेदित्यर्थ ॥५४॥

वा पक्षान्तरे द्रष्ट्रादीनां त्रिपुटी यत्र यस्मिन् वस्तुनि विरूपविलय भजते स्वरूपराहित्येन विलीना भवति तत्रैव दृष्टि कार्या न नासाग्रावलोकनी ॥ नासाग्रावलोकनस्यावश्यकत्वमिति भाव ॥५५॥५६॥

परैरलक्षितशीलवृत्त शीलं च वृत्तं च शीलवृत्ते स्वभावाचरणे ते न लक्षिते यस्य स असङ्ग सन् देवालये अग्न्यागारे तरुमूले गुहायां वा ब्रह्मरूप सन् वसेत् ॥ ५७ ॥

यत्र कुत्रापि यस्यां कस्यामपि स्थितौ ब्रह्ममात्रो स्वेमहिम्नि उपशान्त यति निरिन्धन ज्योतिरिव न चोद्विजेदुद्विजेत् उद्विग्नो न भवतीति भाव आवृत्तिर्निषेधदार्ढ्याय ॥५८॥

नियमितान्तरिन्द्रिय शान्त तथाभूतबाह्येन्द्रियो दान्त स्वातिरिक्तं नेत्युपरत निष्क्रिय तितिक्षु "सहन सर्वदुःखानामप्रतीकारपूर्वकं चिन्ताविलापरहित सा तितिक्षा निगद्यते । इत्युक्तलक्षणतितिक्षावान् अनूचानो विनीत इत्थभूतो योगी हीतिनिश्चयेन ब्रह्मसमान ब्रह्मरूप

त्यक्तैषणो ह्यनृणस्तं विदित्वा मौनी वसेदाश्रमे यत्र कुत्र ॥६०॥
यमैश्च नियमैश्चैव ह्यासनैश्च सुसंयुतः ॥ ६१ ॥
नाडीशुद्धिश्च कृत्वाऽऽदौ प्राणायामं समाचरेत् ॥ ६२ ॥
सर्वचिन्तां परित्यज्य सावधानेन चेतसा ॥ ६३ ॥
निर्विकल्पः प्रसन्नात्मा प्राणायामं समाचरेत् ॥ ६४ ॥
मरुदभ्यसनं सर्वं मनोयुक्तं समभ्यसेत् ॥ ६५ ॥
इतरत्र न कर्तव्या मनोवृत्तिर्मनीषिणा ॥ ६६ ॥

ओं तत्सदिति साद्धान्तिकविधिवाक्यानि महावाक्य रत्नावल्यां प्रथमप्रकरणे षट्षष्टिः ॥ ६६ ॥

---

सर्वमात्मवदभिज्ञो जानाति स्म ॥ ५६ ॥

वित्तैषणा-पुत्रैषणा-लोकैषणाभी रहितः ब्रह्मचर्ययज्ञप्रजोत्पादन-ऋषिदेवपितृणतो मुक्तो ह्यनृणः मौनी तमात्मानं विदित्वा यत्र कुत्र वाऽऽश्रमे वसेत् ॥ ६० ॥

आदौ अहिंसासत्यमस्तेयब्रह्मचर्यापरिग्रहा यमा इति पातञ्जल-सूत्रोक्तपञ्चविधैर्यमैः शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमा इति पातञ्जलोक्तपञ्चविधैर्नियमैः सिद्धस्वस्तिकपद्मासनाद्यैरासनैश्च सुसंयुतः नाडीशुद्धिं कृत्वा प्राणायामं समाचरेत् गुरूपदेशेनाचरेदित्यर्थः ॥ ६१ ॥ ६२ ॥

सर्वचिन्तां परित्यज्य निर्विकल्पः निःसंशयः प्रसन्नात्मा शान्तः सावधानेन चेतसा प्राणायामं समाचरेत् सम्यगभ्यसेत् ॥६३॥६४॥

सर्वं मरुदभ्यसनं प्राणायामं सहितं केवलं वा मनोयुक्तं समभ्यसेत निरन्तरं कुर्यादित्यर्थः अतो मनीषिणा योगिना इतरत्र प्राणायामातिरिक्तविषयेषु मनोवृत्तिर्न कर्तव्या ॥ ६५ ॥ ६६ ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायां महावाक्यरत्नावलि-टीकायां प्रभाभिधानायां विधिवाक्यविवरणं सम्पूर्णम् ॥

# अथ सार्द्धान्तिकबन्धमोक्षवाक्यानि ।

देहादीनात्मत्वेनाभिमन्यते सोऽभिमान आत्मनो बन्धः ॥ १ ॥
तन्निवृत्तिर्मोक्षः ॥ २ ॥
देवमनुष्याद्युपासना कामसङ्कल्पो बन्धः ॥ ३ ॥
कर्तृत्वाद्यहङ्कारसङ्कल्पो बन्धः ॥ ४ ॥
अणिमाद्यष्टैश्वर्याशासिद्धसङ्कल्पो बन्धः ॥ ५ ॥
यमाद्यष्टाङ्गयोगसङ्कल्पो बन्धः ॥ ६ ॥
केवलमोक्षापेक्षासङ्कल्पो बन्धः ॥ ७ ॥
सङ्कल्पमात्रसम्भवो बन्धः ॥ ८ ॥
नित्यानित्यवस्तुविचारादनित्यसंसारसुखदुःखविषयसमस्तक्षेत्रममतावन्धक्षयो मोक्षः ॥ ९ ॥

---

देहादीन् देहेन्द्रियमनोबुद्ध्यादीनात्मत्वेनाभिमन्यते देहोहमिन्द्रियाण्यहमित्याद्याकारको यः सोऽभिमान आत्मनो बन्धः ॥ १ ॥

तन्निवृत्तिः उक्ताभिमाननिवृत्तिर्मोक्षः ॥ २ ॥

कामनाधिया देवानां मनुष्याणां यक्षराक्षसादीनां चोपासना कर्त्तव्येति सङ्कल्पो बन्धः ॥ ३ ॥

कर्मकर्त्ता तत्फलभोक्ताहमित्यहंभावकलितसङ्कल्पो बन्धः ॥ ४ ॥

अणिममहिमगरिमलघिमप्राप्तिप्राकाम्येशित्ववशित्वाष्टैश्वर्यं मे स्यादित्याशासिद्धसङ्कल्पो बन्धः ॥ ५ ॥

यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गयोगः साधनीय इति सङ्कल्पो बन्धः ॥ ६ ॥

स्वाविद्याबन्धान्मोक्षो मे स्यादिति केवलमोक्षापेक्षासङ्कल्पोऽपि बन्ध एव स्वस्य नित्यमोक्षस्वरूपत्वेन बन्धसापेक्षमोक्षसङ्कल्पस्यापि बन्धत्वसिद्धिरिति भावः ॥ ७ ॥

किं बहुना सङ्कल्पमात्रस्य सम्भव उत्पत्तिरपि बन्धो भवति ॥८॥

मोक्षसङ्कल्पस्य बन्धत्वे मोक्षःकीदृश इत्याह नित्यानित्येति नित्या-

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ॥ १० ॥
बन्धनं विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ ११ ॥
ममेति बध्यते जन्तुर्निर्ममेति विमुच्यते ॥ १२ ॥
ममत्वेन भवेज्जीवो निर्ममत्वेन केवलः ॥ १३ ॥
स्वसङ्कल्पवशाद्बद्धो निःसङ्कल्पाद्विमुच्यते ॥ १४ ॥
द्रष्टा दृश्यवशाद्बद्धो दृश्याभावे विमुच्यते ॥ १५ ॥
इच्छामात्रमविद्येयं तन्नाशो मोक्ष उच्यते ॥ १६ ॥
भोगेच्छामात्रको बन्धस्तत्त्यागो मोक्ष उच्यते ॥ १७ ॥
चिच्चैत्यकलितो बन्धस्तन्मुक्तिर्मुक्तिरुच्यते ॥ १८ ॥

---

नित्यवस्तुनोः भावाभावरूपतया विचाराद् संसारप्रादुर्भूतसुखदुःखविषयपूरितस्वदेहादिसमस्तदेवेष्वहन्ता ममता च बन्धस्तत्त्याग एव मोक्षः ॥ ९ ॥

मनुष्यादीनां बन्धमोक्षकारणं मन एव ॥ १० ॥

तत्र विषयासक्तं मनो बन्धहेतुर्निर्विषयं मनो मुक्तये भवतीति स्मृतम् ॥ ११ ॥

जन्तुः साधारणजीवजातं देहदारादावहं ममेत्यभिमानतो बध्यते निरहंममाभिमानतो मुच्यते ॥ १२ ॥

स्वस्मिन् स्वातिरिक्ते चाहन्त्वेन ममत्वेन च जीवो भवति तत्र पुनरहङ्कारममकाराभावेन केवलो निर्विशेषः परमात्मैव भवति ॥१३॥

जीव इदं मे स्यादिदं मे स्यादिति स्वसङ्कल्पवशाद्बध्यते सङ्कल्पनीयस्यातिरिक्तं किमपि नेति निःसङ्कल्पवशाद्विमुच्यते ॥ १४ ॥

द्रष्टा स्वदृश्यसत्ताग्रहतो बध्यते तदभिमानाभावाद्विमुच्यते ॥१५॥

इयमविद्या इच्छारूपैव तन्नाशो मोक्ष उच्यते ॥ १६ ॥

आविषयकभोगमात्रेच्छा बन्धो विद्यया तत्त्यागो मोक्ष उच्यते ॥१७॥

चितश्चिदात्मनश्चैत्येन ज्ञानविषयीभूतशरीरादिप्रपञ्चेन सह कलनासम्बन्धो बन्धः। तन्मुक्तिः तत्सम्बन्धनिरहो मुक्तिः कथ्यते ॥१८॥

अनास्थैव हि निर्वाणं दुःखमास्थापरिग्रहः ॥ १९ ॥
कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ॥ २० ॥
स्वरूपावस्थितिर्मुक्तिस्तद्भ्रंशोऽहन्त्ववेदनम् ॥ २१ ॥
चित्ते चलति संसारो निश्चले मोक्ष उच्यते ॥ २२ ॥
बद्धो हि वासनाबद्धो मोक्षः स्याद्वासनाक्षयः ॥२३॥
पदार्थभावनादार्ढ्यं बन्ध इत्यभिधीयते ॥ २४ ॥
वासनातानवं ब्रह्मन् मोक्ष इत्यभिधीयते ॥ २५ ॥
न मोक्षो नभसः पृष्ठे न पाताले न भूतले ॥ २६ ॥
सर्वाशासंक्षये चेतःक्षयो मोक्ष इतीष्यते ॥ २७ ॥

---

आस्थापरिग्रहः घटपटादिषु नानात्वबुद्धिस्वीकारो दुःखं बन्धहेतुः अनास्था तेषु अभेदबुद्धिर्निर्वाणं मोक्षहेतुः। हिर्निश्चयार्थः यद्वा दुःखमास्थापरिग्रहः आस्था विषयादीनामपेक्षा तस्याः परिग्रहः स्वीकारो दुःखं दुःखहेतुरित्यर्थः। अनास्थैव हि निर्वाणम् अनास्था विषयादीनामुपेक्षा हीति निश्चयेन निर्वाणं मोक्षो मोक्षहेतुरित्यर्थः। "आस्था त्वालम्बनास्थानयत्नापेक्षासु योषिति" इति मेदनी ॥१९॥

सर्वो जन्तुः शुभाशुभकर्मणा बध्यते विद्यया ज्ञानेन कर्मकृतबन्धनाद्विमुच्यते ॥ २० ॥

स्वस्वरूपज्ञानं मुक्तिः स्वरूपविभ्रंशो देहादावहन्त्ववेदनं तज्ज्ञानं बन्धो भवति ॥ २१ ॥

स्वरूपतश्चेतश्चलनाचलने बन्धमोक्षहेतू भवतः ॥ २२ ॥

बद्धः संसारी नानाविधवासनया बद्धो भवति हिर्निश्चयार्थः सर्ववासनाक्षयान्मोक्षो भवति ॥ २३ ॥

सांसारिकपदार्थलाभाय दृढचिन्तनं बन्धः ॥ २४ ॥

हे ब्रह्मन् वासनानां तानवमभावस्तेन यः सिद्ध्यति स मोक्ष इत्यभिधीयते ॥ २५ ॥

एवंभूतो मोक्षः क्व तिष्ठतीत्याह पाताले भूतले नभसः पृष्ठे मोक्षो न विद्यते किन्तु ॥ २६ ॥

चेतःकल्पितसर्वाशाक्षये चेतःक्षयो भवति तत्क्षयतः प्रादुर्भूतो

मोक्षो मे ऽस्त्विति चिन्ताऽन्तर्जाता चेदुत्थितं मनः ॥२८॥
मननोत्थे मनस्येष बन्धः सांसारिको मतः ॥ २९ ॥
तदमार्जनमात्रं हि महासंसारतां गतम् ॥ ३० ॥
तत्प्रमार्जनमात्रन्तु मोक्ष इत्यभिधीयते ॥ ३१ ॥

ॐ तत्सदिति सार्द्धान्तिकबन्धमोक्षवाक्यानि महावाक्यरत्नावल्यां द्वितीयप्रकरणे एकत्रिंशत् ॥ ३१ ॥

---

मोक्ष इतीष्यते ॥ २७ ॥

अन्तर्मनसि मोक्षो मेऽस्त्विति चिन्ता जाता चेन्मनः उत्थितं विक्षिप्तं भवति ॥ २८ ॥

एवं मननोत्थे मननविक्षिप्ते मनसि एष सांसारिको बन्धो मतः सिद्धः ॥ २९ ॥

तन्मनसोऽमार्जनमात्रमशोधनमेव महासंसारतां गतं महाबन्ध इत्यर्थः ॥ ३० ॥

तस्य मनसः प्रमार्जनमात्रेण मोक्षः स्यात् एवाविर्भवतीति भावः ॥३१॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायां महावाक्यरत्नावलिटीकायां प्रभाभिधानायां बन्धमोक्षवाक्यविवरणं सम्पूर्णम् ।

आहत्यवाक्यानि सप्तनवतिः ॥ ९७ ॥

# अथ सार्द्धान्तिकाविद्वन्निन्दावाक्यानि ।

अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद यथा पशुः ॥ १ ॥
अत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योः स मृत्युमाप्नोति ॥ २ ॥
कर्तृत्वाद्यहङ्कारभावनारूढो मूढः ॥ ३ ॥
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ ४ ॥
अनुभूतिं विना मूढो वृथा ब्रह्मणि मोदते ॥ ५ ॥
प्रतिबिम्बितशाखाग्रफलास्वादनमोदवत् ॥ ६ ॥
अष्टाङ्गञ्च चतुष्पादं त्रिस्थानं पञ्चदैवतम् ॥ ७ ॥

---

अथाविद्वन्निन्दारभ्यते। अत्राथशब्द आरम्भार्थः अन्योऽसावीश्वरः अन्योऽहं जीवोऽस्मीति मत्वा यः पुमान् अन्यां स्वभिन्नां देवतामुपास्ते स न किञ्चिद्वेद यथा पशुरित्यर्थः ॥ १ ॥

अत्रास्मिन् निर्भेदे ब्रह्मणि जगज्जीवेशसाक्षिणां मिथो भिदामिव भेदमिव मन्यमानः पुमान् स्वाधिष्ठितशरीरेण साकं शतधा सहस्रधा प्रतिक्षणं भिन्नो भवति स मृत्योर्मृत्युं जनिमृतिपरम्परामेति घटीयन्त्रवदविश्रान्तं संसरतीत्यर्थः ॥ २ ॥

अहं कर्ता अहं भोक्तेत्याद्यहंकारभावनावान् मूढः अज्ञः ॥ ३ ॥

इह ब्रह्मण्यनानारूपे यस्तु जगज्जीवेशादिनानेव पश्यति स मृत्योर्मृत्युमाप्नोतीत्युक्तार्थम् ॥ ४ ॥

जलाशयप्रतिबिम्बितसहकारशाखाग्रलम्बमानफलास्वादनमोदो यथा नार्थवान् तथा मूढः स्वाज्ञो ब्रह्मणि ब्रह्माहमस्मीत्यनुभूतिं विना वृथा ब्रह्मानन्दाभासे मोदते "स्वानुभूत्यात्मकं ज्ञानं कैवल्यफलदं हि तद्" इति स्मृतेः ॥ ५ ॥ ६ ॥

अकारोकारमकारार्धमात्राबिन्दुकलाकलातीततत्परभेदेनाष्टाङ्गं विश्वतैजसप्राज्ञतुर्यभेदेन विराट्सूत्रबीजतुर्यभेदेन च चतुष्पादं कैलास-

ओङ्कारं यो न जानाति ब्राह्मणो न भवेत्तु सः ॥ ८ ॥
अतिवर्णाश्रमं रूपं सच्चिदानन्दलक्षणम् ॥ ९ ॥
यो न जानाति सोऽविद्वान्कदा मुक्तो भविष्यति ॥ १० ॥
कुशला ब्रह्मवार्तायां वृत्तिहीनाः सुरागिणः ॥ ११ ॥
तेऽप्यज्ञानतया नूनं पुनरायान्ति यान्ति च ॥ १२ ॥
काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ॥ १३ ॥
स्वायत्तमेकान्तहितं स्वेप्सितत्यागवेदनम् ॥ १४ ॥
यस्य दुष्करतां यातं धिक् तं पुरुषकीटकम् ॥ १५ ॥
अद्वितीयब्रह्मतत्त्वं न जानन्ति यदा तदा ॥ १६ ॥
भ्रान्ता एवाखिलास्तेषां क्व मुक्तिः क्वेह वा सुखम् ॥१७॥

---

वैकुण्ठब्रह्मलोकभेदेन जाग्रत्स्वप्नसुषुप्तिभेदेन च त्रिस्थानं ब्रह्मविष्णुरुद्रेश्वरसदाशिवभेदेन पञ्चदैवतम् एवमुक्तलक्षणलक्षितमोङ्कारं परमात्मानं स्वस्वरूपं यो न जानाति स ब्रह्मनिष्ठो न भवतीत्यर्थः ॥ ७ ॥ ८ ॥

वर्णाश्रमविशिष्टदेहोपलक्षिताऽविद्यातत्कार्यजातमतीत्य वर्तते इत्यतिवर्णाश्रमं रूपं सच्चिदानन्दलक्षणं ब्रह्म स्वस्वरूपमिति यो न जानाति सोऽयमविद्वान् कदा मुक्तो भविष्यति न कदापीत्यर्थः ॥ ९ ॥ १० ॥

ये सुरागिणः विषयासक्ताः वृत्तिहीनाः ब्रह्माकारवृत्तिहीनाः ब्रह्मवार्तायां कुशला अपि ते अज्ञानतया अज्ञानित्वेन नूनं निश्चयेन पुनरायान्ति यान्ति चेत्यर्थः ॥ ११ ॥ १२ ॥

ज्ञानदण्डवैकल्येन काष्ठदण्डो येन संन्यासिना धृतः स सर्वाशी कुक्षिम्भरिर्भवति ज्ञानवर्जितः स्वरूपज्ञानशून्यः सन् ॥ १३ ॥

यस्य पुंसः स्वायत्तं स्वाधीनमेकान्तहितमत्यन्तोपकारकं स्वाभिलषितविषयत्यागज्ञानं कर्तुमशक्यमभवत् तं पुरुषकीटकं धिगिति श्रुतिर्निन्दयति ॥ १४ ॥ १५ ॥

साधकाः यदा अद्वितीयब्रह्मतत्त्वं स्वस्वरूपमिति न जानन्ति तदैव ते सर्वे भ्रान्ता भवन्ति तेषां मुक्तिः क्व इह सुखं वा क्व न कदापीत्यर्थः ॥ १६ ॥ १७ ॥

अज्ञानोपहतो बाल्ये यौवने वनिताहृतः ॥ १८ ॥
शेषे कलत्रचिन्तार्त्तः किं करोति नराधमः ॥ १९ ॥
इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन जन्तवः ॥ २० ॥
धराविवरमग्नानां कीटानां समतां गताः ॥ २१ ॥

ओं तत्सदिति साद्धौन्तिकाविद्वन्निन्दावाक्यानि महावाक्यरत्नावल्यां तृतीयप्रकरणे एकविंशतिः ॥ २१ ॥

---

अथ नराधमः बाल्ये बाल्यावस्थायामज्ञानोपहतो भवति अज्ञानवशात् स्वेष्टचिन्तनं कर्त्तुं न शक्नोति यौवने यौवनावस्थायां वनिताहृतः स्त्रिया वशीकृतस्तदनुरोधेन अन्ध इव स्वेष्टं न पश्यति शेषे वार्द्धक्ये कलत्रचिन्तार्त्तः कलत्रादिचिन्तया पीडितः सन् किं करोति नाम स्वश्रेयस्साधनं न किमपि करोतीत्यर्थः ॥ १८ ॥ १९ ॥

जन्तवः साधकाः इच्छाद्वेषाभ्यां सम्यगुत्थेन समुत्पन्नेन द्वन्द्वमोहेन मूढाः धराविवरमग्नकीटानां समतां गताः ॥ २० ॥ २१ ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायां महावाक्यरत्नावलिटीकायां प्रभाभिधानायामविद्वन्निन्दावाक्यविवरणं सम्पूर्णम् ॥
आहत्यवाक्यानि अष्टादशोत्तरशतम् ॥ ११८ ॥

# अथ सार्द्धान्तिकजगन्मिथ्यावाक्यानि ।

नान्यत्किञ्चन मिषत् ॥ १ ॥

वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ २ ॥

अतोऽन्यदार्त्तम् ॥ ३ ॥

न तु तद्द्वितीयमस्ति ॥ ४ ॥

नात्र काचन भिदाऽस्ति नैव तत्र काचन भिदाऽस्ति ॥ ५ ॥

सर्वं विकारजातं मायामात्रम् ॥ ६ ॥

सर्वत्र न ह्यस्ति द्वैतसिद्धिः ॥ ७ ॥

नास्ति द्वैतं कुतो मर्त्यम् ॥ ८ ॥

प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ॥ ९ ॥

---

ब्रह्मातिरेकेण किञ्चन किञ्चिदपि अन्यत् मिषत् चलत् जङ्गमं स्थावरञ्च नास्तीत्यर्थः ॥ १ ॥

यथा घटशरावादि नाममात्रं वाचारम्भणं मृत्तिकेत्येव सत्यम् तथा विकारः कार्यजातं नामधेयं नाममात्रम् । वाचारम्भणं वाग्व्यापार-विषयीभूतम् । वस्तुतो ब्रह्मैव सत्यमित्यर्थः ॥ २ ॥

अतो ब्रह्मणोऽन्यत् जगत् आर्तम् मृत्युना पीडितं नश्वरं ततो मिथ्येत्यर्थः ॥ ३ ॥

न तु तस्मात् ब्रह्मणः सकाशात् द्वितीयं किञ्चिदप्यस्ति ॥ ४ ॥

अत्र जीवे कामसङ्कल्पादिरूपेण न काचन भिदाऽस्ति न कश्चन भेदोऽस्ति तत्र परमात्मनि विश्वविराडादिरूपेण न परिच्छेदोऽस्ति ५

सर्वं कार्यजातं सांसारिकं वस्तु मायामात्रं मिथ्येत्यर्थः ॥ ६ ॥

सर्वत्र अखण्डैकरसे ब्रह्मणि द्वैतप्रपञ्चसिद्धिर्नास्ति ॥ ७ ॥

जगज्जीवेश्वरादिभेदेन द्वैत नास्ति तदन्तर्गतभेदविशिष्टं मर्त्यं मरण-शीलं वस्तु कुत. सम्भवति "द्वैताद्धि भयम्" इत्यादि श्रुतेः ॥ ८ ॥

प्रपञ्चः संसारः यदि विद्येत भवेत् तदा ब्रह्मातिरिक्तं न किञ्चि-दस्तीति ज्ञानतो निवर्तेत अत्र संशयो नास्ति ॥ ९ ॥

मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ १० ॥
विकल्पो विनिवर्तेत कल्पितो यदि केन चित् ॥ ११ ॥
उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥ १२ ॥
द्वितीयकारणाभावादनुत्पन्नमिदञ्जगत् ॥ १३ ॥
यथैवेदं नभः शून्यं जगच्छून्यं तथैव हि ॥ १४ ॥
इदं प्रपञ्चं यत्किञ्चिद्यज्जगति वीच्यते ॥ १५ ॥
दृश्यरूपञ्च दृग्रूपं सर्वं शशविषाणवत् ॥ १६ ॥
इदं प्रपञ्चं नास्त्येव नोत्पन्नं नो स्थितञ्जगत् ॥ १७ ॥

---

इदं द्वैतं जगत् मायामात्रं मिथ्येत्यर्थः परमार्थतः यथार्थमद्वैतं ब्रह्मैवावशिष्यते ॥ १० ॥

ब्रह्मणि रामकृष्णादिविकल्पः केनचित् स्वस्वरूपाज्ञेन यदि विकल्पितः स्यात्तदा स्वस्वरूपज्ञदशया निवर्तेत ॥ ११ ॥

उपदेशात् उपदेशार्थं गुरुशिष्यादिवादो विकल्पितोऽभूत् ज्ञाते तत्त्वे द्वैतं न विद्यते ॥ १२ ॥

ब्रह्मातिरिक्तकारणान्तराभावादिदं जगदनुत्पन्नम् । कार्यकारणयोरप्यजत्वात् "स बाह्याभ्यन्तरो ह्यजः" इति श्रुतेः यथा शुक्तिविवर्तकारणोत्पन्नं रजतं शुक्त्यज्ञानभानमुत्पन्नमपि वस्तुतोऽनुत्पन्नमेवैवं ब्रह्मविवर्तकारणोत्पन्नमिदं जगत् ब्रह्माज्ञानभानमुत्पन्नमपि वस्तुतोऽनुत्पन्नमेवेतिभावः ॥ १३ ॥

यथैव इदं नभः शून्यं तथा जगदपि ब्रह्मसत्तयैव सर्वं जगत्सदिव भाति वस्तुतः स्वयमसदेवेतिभावः ॥ १४ ॥

इदं प्रपञ्चमित्यत्र लिङ्गव्यत्ययश्छान्दसः । अयं प्रपञ्चः जगति सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन वा घटादिदृश्यरूपमिन्द्रियादिदृग्रूपं च यत्किञ्चिद्वीक्ष्यते तत्सर्वं शशविषाणवदलीकं मन्तव्यमित्यर्थः ॥ १५ ॥ १६ ॥

अयं प्रपञ्चो जगत् नास्त्येव नोत्पन्नं नो स्थितं न नष्टं चेति मन्तव्यम् इदं जगत् कालत्रयेऽप्यसदिति भावः ॥ १७ ॥

चित्तं प्रपञ्चमित्याहुर्नास्ति नास्त्येव सर्वदा ॥ १८ ॥
मायाकार्यादिकं नास्ति माया नास्ति भयं न हि ॥ १९ ॥
परं ब्रह्माहमस्मीति स्मरणस्य मनो न हि ॥ २० ॥
वन्ध्याकुमारवचने भीतिश्चेदस्त्विदञ्जगत् ॥ २१ ॥
शशशृङ्गेण नागेन्द्रो मृतश्चेज्जगदस्ति तत् ॥ २२ ॥
मृगतृष्णाजलं पीत्वा तृप्तश्चेदस्त्विदञ्जगत् ॥ २३ ॥
गन्धर्वनगरे सत्ये जगद्भवति सर्वदा ॥ २४ ॥
गगने नीलिमा सत्यो जगत्सत्यं भविष्यति ॥ २५ ॥
मासात्पूर्वं मृतो मर्त्यो ह्यागतश्चेज्जगद्भवेत् ॥ २६ ॥
गोस्तनादुद्भवं क्षीरं पुनरारोपणे जगत् ॥ २७ ॥

---

प्रपञ्चज्ञानमूलं चित्तमित्याहुः तदपि सर्वदा नास्ति नास्त्येवेत्यावृत्तिर्निषेधदार्ढ्याय ॥ १८ ॥

ब्रह्मज्ञाने सति मायातत्कार्यम् अनन्तकोटिब्रह्माण्डजातं द्वैतजं भयं परब्रह्माहमस्मीति वृत्तिमन्मनश्चापि न ह्यस्तीत्यर्थः ॥ १९ ॥ २० ॥

वन्ध्याकुमारमूर्खवचनाद्भीतिर्भयं भवेच्चेदिदं जगत् भवेत् तद्द्वयमसज्जगदप्यसदितिभावः ॥ २१ ॥

शशशृङ्गेणाहतनागेन्द्रो म्रियेत चेत्तदा नास्तिकैरसदिति स्वीकृतं जगदपि भवेत् तन्मरणमसम्भवि जगदप्यसम्भवीति भावः ॥ २२ ॥

मरुमरीचिवारि पीत्वा तृषार्त्तो यदि वितृषो भवेदिदमपि जगद्भवेत् ॥ २३ ॥

मुमूर्षावस्थाविभातगन्धर्वनगरं सत्यं चेज्जगदपि सर्वदा सत्यमितिभावः ॥ २४ ॥

आकाशे कालिमा तथ्यं चेज्जगदपि तथ्यम् ॥ २५ ॥

मृतमनुजागमनं यथाऽलीकं तथा जगदपीति भावः ॥ २६ ॥

गोस्तनजं क्षीरं पुनस्तन्मार्गेणैव स्थापितं चेज्जगदपि भवेदित्यर्थः ॥ २७ ॥

ज्वालाग्निमण्डले पद्मवृद्धिश्चेदस्त्विदं जगत् ॥ २८ ॥
ज्ञानिनो हृदयं मूढैर्ज्ञातञ्चेदस्त्विदं जगत् ॥ २६ ॥
अजकुक्षौ जगन्नास्ति ह्यात्मकुक्षौ जगन्न हि ॥ ३० ॥
सर्वदा भेदकलनं द्वैताद्वैतं न विद्यते ॥ ३१ ॥
नास्ति नास्ति जगत्सर्वं गुरुशिष्यादिकं नहि ॥ ३२ ॥
सच्चिदानन्दमात्रोऽहमनुत्पन्नमिदं जगत् ॥ ३३ ॥

ओं तत्सदिति सार्द्धान्तिकजगन्मिथ्यामहावाक्यानि महावाक्यरत्नावल्यां चतुर्थप्रकरणे त्रयस्त्रिंशत् ॥ ३३ ॥



---

वह्निज्वालामण्डले पद्मं वर्द्धते चेदिदमपि जगद्भवेदित्यर्थः ॥२८॥

ब्रह्मज्ञानिनो हृदयम् अज्ञैर्ज्ञातञ्चेदिदंजगदपि भवेदित्यर्थः ॥ २६ ॥

अजस्य विधातुः कुक्षौ उदरे जगन्नास्ति आत्मकुक्षौ जगन्न हि आब्रह्मस्तम्बपर्यन्तमपि जगत्सत्यं नेतिभावः ॥ ३० ॥

सार्वदिकभेदज्ञानविशिष्टं द्वैताद्वैतात्मकं जगन्नास्तीत्यर्थः ॥ ३१ ॥

सर्वं जगन्नास्ति नास्तीत्यावृत्तिः प्रतिषेधदार्ढ्याय जगतः प्रतिषेधने गुरुशिष्यादेः प्रतिषेधः सिद्ध एवेत्यनुवदति श्रुतिर्गुरुशिष्यादिकमिति ॥ ३२ ॥

सच्चिदानन्दरूपएवाहमिति धीर्निश्चयात्मिका यस्योदेति तस्येदं जगदनुत्पन्नमेवेतिभावः ॥ ३३ ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायां महावाक्यरत्नावलिटीकायां प्रभाभिधानायां जगन्मिथ्यावाक्यविवरणं सम्पूर्णम् ॥ ३३ ॥

आहत्यवाक्यान्येकपञ्चाशदुत्तरशतम् ॥ १५१ ॥



# अथसाद्धान्तिकोपदेशवाक्यानि ।

स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो॥१॥
अभयं वै जनक प्राप्तोऽसि ॥ २ ॥
ब्रह्मचर्यमहिंसाञ्चापरिग्रहञ्च सत्यञ्च यत्नेन
हे रक्षतो हे रक्षतो हे रक्षत इति ॥ ३ ॥
तत्त्वमसि त्वं तदसि ॥ ४ ॥
यन्मनसा न मनुते येनाहुर्मनो मतम् ॥ ५ ॥

---

हे श्वेतकेतो य एषोऽणिमाऽणुत्वं स आत्मा परमात्मा ऐतदात्म्य परमात्मरूपमिदं सर्वं जगत् तत् परमात्मा सत्यं स अणिमरूपात्मा त्वं तत्परमात्मासि एतावता जगज्जीवपरमात्मनामेकत्वं सिद्धम् ॥ तदिति नपुंसकत्वं छान्दसम् ॥ १ ॥

हे जनक अभयं वै प्राप्तोऽसि ब्रह्मैव भवसीत्यर्थः ॥ २ ॥

हे शिष्या यूयं बाह्यमान्तरं च्चेति द्विविधं ब्रह्मचर्यं "दर्शनं स्पर्शनं केलिः कीर्तनं गुह्यभाषणम् । सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्यमनुष्ठेयं मुमुक्षुभिः ॥" इति श्रुतिसिद्धाष्टाङ्गमैथुनवर्जितं बाह्यं ब्रह्मचर्यं ब्रह्मानुसन्धानमान्तरम् । अहिंसां च प्राणिमात्रापीडनम् । अपरिग्रहं च प्राणधारणेतरास्वीकरणं सत्यं च यथार्थाभिभाषणं च यत्नेन रक्षत आवृत्तिरादरार्था । रक्षतः इति छान्दसम् ॥ ३ ॥

प्रथमं तत्पदलक्ष्यार्थेन ब्रह्मणा सह त्वंपदलक्ष्यार्थस्येश्वरस्याभेदः अनन्तरं त्वंपदलक्ष्यार्थेनेश्वरेण सह तत्पदलक्ष्यार्थस्य ब्रह्मणोऽभेद इति पर्यवसितोऽर्थः ॥ ४ ॥

यद्ब्रह्म मनसा न मनुते न बुद्ध्यते येन ब्रह्मणा ब्रह्मविदो मनो मतं ज्ञातमाहुः अस्याशयः संशयापन्नैः पुरुषैर्वेदान्तग्रन्थेऽन्वेष्टव्यः तावत् स्वयं प्रकाश इति नास्त्येव ब्रह्मणो मनोऽगोचरतासिद्धिर्दरीदृश्यते प्रत्युतास्यैव ब्रह्मणो मनआदिसकलजडपदार्थद्रष्टृताज्ञातृता

तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ६ ॥
यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ॥ ७ ॥
सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत् ॥ ८ ॥
अन्तः पूर्णो बहिः पूर्णः पूर्णकुम्भ इवार्णवे ॥ ९ ॥
अन्तः शून्यो बहिः शून्यः शून्यकुम्भ इवाम्बरे ॥ १० ॥
मा भवग्राह्यभावात्मा ग्राहकात्मा च मा भव ॥ ११ ॥
भावनामखिलां त्यक्त्वा यच्छिष्टं तन्मयो भव ॥ १२ ॥
द्रष्टृदर्शनदृश्यानि त्यक्त्वा वासनया सह ॥ १३ ॥
दर्शनप्रथमाभासमात्मानं केवलं भज ॥ १४ ॥

---

सिद्ध्यति ॥ तदेव ब्रह्म त्वं विद्धि जानीहि यदिदं ब्रह्म विष्णुरुद्रादिकं केचिदुपासते तद्ब्रह्म न भवतीत्यर्थः ॥ ५ ॥ ६ ॥

यत्परं ब्रह्म सर्वात्मा सर्वस्वरूपः तत् महत् व्यापकं विश्वस्यायतन विश्वाधारभूतमित्यर्थः ॥ ७ ॥

यत्सूक्ष्मात् सूक्ष्मतरं ब्रह्म नित्यं हे शिष्य तत् त्वमेवतदिति ब्रह्मजीव योः परोक्षत्वाऽपरोक्षत्वादिविरुद्धांशत्यागपूर्वकं भागत्यागलक्षणया अविरुद्धचैतन्यांशमात्रग्रहणतात्पर्येण वाक्ये स्वरूपव्यत्ययः ॥ ८ ॥

अर्णवस्थपूर्णकुम्भवत् अम्बरस्थशून्यकुम्भवच्च निर्विशेषतया अन्तर्बाह्यसम्बन्धशून्य विभात्यन्तर्बाह्यान्तरालेषु पूर्णरूपेण परमात्मैवावशिष्यते इत्यर्थः ॥ ९ ॥ १० ॥

शरीरादिविषयजातं ग्राह्य तत्कल्पकमानसवृत्तिजातं ग्राहकं तदुभयस्वरूपो मा भव अखिलां भावनां वासनां त्यक्त्वा यदवशिष्टं ब्रह्म तन्मयो भव ॥ ११ ॥ १२ ॥

द्रष्टा जीवः दर्शनं घटादिविषयकज्ञानम् दृश्यं घटादि अहं द्रष्टेत्याद्यखिलवासनया सह वस्तुत्रयं त्यक्त्वा दर्शनप्रथमाभासं केवलमात्मानं भज ॥ १३ ॥ १४ ॥

चित्ताकाशं चिदाकाशमाकाशञ्च तृतीयकम् ॥ १५ ॥
द्वाभ्यां शून्यतरं विद्धि चिदाकाशं महामुने ॥ १६ ॥
ध्यानतो हृदयाकाशे चिति चिच्चक्रधारया ॥ १७ ॥
मनो मारय निःशङ्कं त्वां प्रबध्नन्ति नारयः ॥ १८ ॥
भोगैकवासनां त्यक्त्वा त्यज त्वं भेदवासनाम् ॥ १९ ॥
भावाभावौ ततस्त्यक्त्वा निर्विकल्पस्थिरो भव ॥ २० ॥
त्यज धर्ममधर्मञ्च उभे सत्यानृते त्यज ॥ २१ ॥
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥ २२ ॥
आत्मन्यतीते सर्वस्मात् सर्वरूपेऽथ वा तते ॥ २३ ॥

---

उक्ताकाशत्रयेषु चित्ताकाशभूताकाशाभ्यां शून्यतरं विलक्षणं शून्यं चिदाकाशं आत्मस्वरूपमिति हे महामुने विद्धि ॥ १५ ॥ १६ ॥

ध्यानतः ब्रह्माहमहंब्रह्मेति ध्यानेन हृदयाकाशे चिति तदवभासके चैतन्ये मनः चिच्चक्रधारया ज्ञानरूपधारया तत् स्वरूपापलापेन निःशङ्कं निर्दयं मारय विलीनं कुरु यतः " मन एव मनुष्याणां कारणं बन्धमोक्षयोः " इत्युक्तदिशा मनसो बन्धहेतुत्वावगमः । अरयः मनसोऽन्ये शत्रवः त्वां न प्रबध्नन्ति तव बन्धनहेतवो न भवन्ति ॥ १७ ॥ १८ ॥

नानाविधस्रक्चन्दनवनितामद्यादिभोग एव परायणमिति भोगैकवासनां त्यक्त्वा जीवेश्वरादिभेदवासनां संस्कारं त्यज ॥ १९ ॥

ततः भावाभावौ व्यावहारिकसत्त्वासत्त्वे त्यक्त्वा निर्विकल्पः निःसंशयः स्थिरो भव ॥ २० ॥

श्रुतिस्मृतिविहितं धर्मं श्रुतिस्मृतिप्रतिषिद्धमधर्मं च सत्यानृते यथार्थायथार्थे उभे त्यज धर्माधर्माद्यभिमानं त्यजेति पर्यवसितोऽर्थः २१

येन सम्यग्ज्ञानेन पूर्वोक्तानर्थान् त्यजसि तज्ज्ञानमपि त्यज ब्रह्ममात्रनिष्ठो भवेत्यर्थः ॥ २२ ॥

सर्वस्मात् सर्वेभ्यः पदार्थेभ्यः अतीते अतिक्रम्य वर्तमानेऽथवा सर्वरूपे तते सर्वव्याकाशवत् व्याप्ते आत्मनि को बन्धः कथं वा मोक्ष

को बन्धः कश्च वा मोक्षो निर्मूलं मननं कुरु ॥ २४ ॥
आशा यातु निराशात्वमभावं यातु भावना ॥ २५ ॥
अमनस्त्वं मनो यातु तवासङ्गेन जीवतः ॥ २६ ॥
एकमाद्यन्तरहितं चिन्मात्रममलं ततम् ॥ २७ ॥
खादप्यतितरां सूक्ष्मं तद्ब्रह्मासि न संशयः ॥ २८ ॥
रक्षको विष्णुरित्यादि ब्रह्मा सृष्टेस्तु कारणम् ॥ २९ ॥
संहारे रुद्र इत्येवं सर्वं मिथ्येति निश्चिनु ॥ ३० ॥
मत्त्यक्तं नास्ति किञ्चिद्वा मत्त्यक्ता पृथिवी तु वा ॥ ३१ ॥
मयातिरिक्तं यद्यद्वा तत्तन्नास्तीति निश्चिनु ॥ ३२ ॥
अनात्मेति प्रसङ्गो वा अनात्मेति मनोऽपि वा ॥ ३३ ॥

---

उभावपि नस्तः अतो निर्मूलं निर्विषयं मननं कुरु त्वातिरिक्तबन्धमोक्षज्ञानं नास्तीति मन्यस्व ॥ २३ ॥ २४ ॥

सर्वथासङ्गेन जीवतः जीवन्मुक्तस्य तव आशा विषयेच्छा निराशात्वं यातु निवृत्ता भवतु तथा भावना भेदभावना अभावं यातु नश्यतु तथा मनः अमनस्त्वं यातु सङ्कल्पविकल्परहितं भवतु ॥ २५ ॥ २६ ॥

सर्वदा एकरूपेण वर्तनादेकमुत्पत्तिप्रलयाभावादाद्यन्तरहितं चिन्मात्रं ज्ञानमात्रं मायामलराहित्यादमलं ततं निर्गुणरूपेण व्याप्तं खात् आकाशात् अपि अतितरां सूक्ष्मं यन्निर्विशेषचैतन्यमवशिष्यते तद्ब्रह्मासीत्यत्र न संशयोऽस्तीत्यर्थः ॥ २७ ॥ २८ ॥

परमार्थदृष्ट्या प्रपञ्चस्य मायिकत्वेन विष्णुः पालयति ब्रह्मा सृजति रुद्रः संहरतीत्यादि सर्वं मिथ्येति निश्चिनु निश्चयं कुर्वित्यर्थः ॥ २९ ॥ ३० ॥

निर्विशेषब्रह्मरूपेण मया परित्यक्तं किञ्चिन्नास्ति पृथिव्याद्युपलक्षितभूतभौतिकजातं मत्तोऽतिरिक्तं यद्यत्किञ्चिन्मन्यसे तत्तन्नास्तीति निश्चिनु "अहमेवेदं सर्वमिति" श्रुतेः मूले वा शब्दः त्यागातिरेकपक्षद्वयसूचकः ॥ ३१ ॥ ३२ ॥

मायारूपानात्मा अस्ति नास्तीति वा प्रसङ्गो विचारः प्रथमविकल्पः मायाकार्यमनोरूपानात्मा अस्ति नास्तीति वा द्वितीयो विकल्पः मनः-

अनात्मेति जगद्वापि नास्त्यनात्मेति निश्चिनु ॥ ३४ ॥
आदिमध्यावसानेषु दुःखं सर्वमिदं यतः ॥ ३५ ॥
तस्मात्सर्वं परित्यज्य तत्त्वनिष्ठो भवानघ ॥ ३६ ॥
निद्राया लोकवार्तायाः शब्दादेरात्मविस्मृतेः ॥ ३७ ॥
क्वचिन्नावसरं दत्वा चिन्तयात्मानमात्मनि ॥ ३८ ॥
सर्वव्यापारमुत्सृज्य अहं ब्रह्मेति भावय ॥ ३९ ॥
अहं ब्रह्मेति निश्चित्य त्वहंभावं परित्यज ॥ ४० ॥
घटाकाशं महाकाश इवात्मानं परात्मनि ॥ ४१ ॥
विलाप्याखण्डभावेन तूष्णीं भव सदा मुने ॥ ४२ ॥

---

कार्यंजगद्रूपानात्मा अस्ति नास्तीति वा तृतीयो विकल्पः । तत्र विकल्पत्रयेऽपि अनात्मापह्नवसिद्धावात्मनि स्वमात्रमिति ज्ञाते नास्त्येवंरूप अध्यवसायो युज्यते तदाशयेन नास्त्यनात्मेति निश्चिनु अनात्मामाया नास्तीति प्रतिपादयति । माया नास्ति मनो नास्तीति श्रुतिरपि तमेवाशय श्रावयति । अत्र श्रुतो मनः सत्तानिरासे जगत्सत्तापि अन्तर्भवति ततो मूलगतविकल्पत्रयसिद्धिः ॥ ३३ ॥ ३४ ॥

हे अनघ यतः यस्मात् आदिमध्यावसानेषु इदं सर्वं जगत् दुःखं दुःखदमस्ति तस्मात् सर्वं परित्यज्य तत्त्वनिष्ठो भव ब्रह्माहमस्मीति भावय ॥ ३५ ॥ ३६ ॥

आत्मनो विस्मृतिर्यतः तदात्मविस्मृति एवभूतायाः निद्रायाः लोकवार्तायाश्शब्दादेश्च कचित् कस्मिन्नपि समये अवसरं न दत्वा आत्मानं ब्रह्माहमस्मीति भावनानिष्पन्न ब्रह्म स्वस्मिन् स्वकीयजीवरूपे चिन्तय सर्वदेतिशेषः ॥ ३७ ॥ ३८ ॥

हे शिष्य त्व प्रपञ्चसम्बन्धिसर्वव्यापारम् उत्सृज्य परित्यज्य अह ब्रह्मास्मीति भावय सोहं ब्रह्मेति निश्चित्य देहाद्यहंकारावधिकमहंभावं परित्यज ब्रह्मस्वरूपो भवेत्यर्थः ॥ ३९ ॥ ४० ॥

हे मुने यथा घटाकाश महाकाशे विलीनः सन् महाकाशमात्रमवशिष्यते तथाऽऽत्मन परमात्मनि विलाप्यते परमात्मैवावशिष्यते इत्यखण्डभावेन तूष्णीं भव निष्क्रियो भव ॥ ४१ ॥ ४२ ॥

चिदिहास्तीति चिन्मात्रमिदं चिन्मयमेव च ॥ ४३ ॥
चित्त्वं चिदहमेते च लोकाश्चिदिति भावय ॥ ४४ ॥
सत्यचिद्घनमखण्डमद्वयं सर्वदृश्यरहितं निरामयम् ॥ ४५ ॥
यत्पदं विमलमद्वयं शिवं तत्सदाहमिति मौनमाश्रय ॥ ४६ ॥
जन्ममृत्युसुखदुःखवर्जितं जातिनीतिकुलगोत्रदूरगम् ॥ ४७ ॥
चिद्विवर्त्तजगतोऽस्यकारणं तत्सदाहमिति मौनमाश्रय ॥ ४८ ॥
पूर्णमद्वयमखण्डचेतनं विश्वभेदकलनादिवर्जितम् ॥ ४९ ॥
अद्वितीयपरसम्विदात्मकं तत्सदाहमिति मौनमाश्रय ॥ ५० ॥
स्वात्मनोऽन्यतयाभातं चराचरमिदञ्जगत् ॥ ५१ ॥
स्वात्ममात्रतया बुद्ध्वातदस्मीति विभावय ॥ ५२ ॥

---

इह संसारे चिदस्ति चिद्विकल्पितमिदं जगच्चिन्मयमेव चिद्रूपमेव त्वञ्चाहञ्चैते लोकाश्च चिन्मात्रमिति भावय ॥ ४३ ॥ ४४ ॥

सत्यं चिद्घनम् ज्ञानघनम् अखण्डम् अद्वयम् जडरूपद्वितीयरहितम् यावद्दृष्टिगोचरवस्तुविलक्षणम् निरामयम् निरुपद्रवम् विमलम् अद्वयम् चेतनरूपद्वितीयरहितम् शिवम् यत्पदं ब्रह्म तत्सदाहमिति मौनमाश्रय निष्क्रियो भव ॥ ४५ ॥ ४६ ॥

यद्ब्रह्म जन्ममृत्युसुखदुःखरहितं जातिनीतिकुलगोत्रवर्जितम् अस्य चिद्विवर्त्तजगतः कारणं तत्सदाहमितिमौनमाश्रय निष्क्रियो भवेत्यर्थः ॥ ४७ ॥ ४८ ॥

पूर्णम् व्यापकम् अद्वयम् अखण्डचेतनम् निरुपाधिचैतन्यम् सर्वभेदज्ञानादिवर्जितम् अद्वितीयपरसम्विदात्मकम् निर्विशेषैकशुद्धज्ञानं तत्सदाहमिति मौनमाश्रय निष्क्रियो भव ॥ ४९ ॥ ५० ॥

स्वस्वरूपाज्ञानदशायां यच्चराचरात्मकमिदं जगत् स्वतो भिन्नं भातं स्वरूपज्ञानदशायां तत् स्वात्ममात्रतया स्वस्वरूपत्वेन बुद्ध्वा तदस्मीति विभावय ॥ ५१ ॥ ५२ ॥

विलाप्य विकृतिं कृत्स्नां सम्भवव्यत्ययक्रमात् ॥ ५३ ॥
परिशिष्टञ्च चिन्मात्रं चिदानन्दं विचिन्तय ॥ ५४ ॥

ओं तत्सदिति सार्द्धान्तिकोपदेशवाक्यानि महावाक्यरत्नावल्यां पञ्चमप्रकरणे चतुःपञ्चाशत् ॥ ५४ ॥



---

उत्पत्तिविपरीतक्रमात् एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथ्वी । इत्युत्पत्तिक्रमः लयक्रमस्तु भूमिं जले जलं वह्नौ वह्निं वायौ वायुमाकाशे आकाशमात्मनि एवंरूपः तस्मात् कृत्स्नां समस्तां विकृतिं विकारजातं पञ्चभूतानि आत्मनि विलाप्य परिशिष्टं चिन्मात्रं ज्ञानमात्रं ब्रह्म चिदानन्दस्वरूपं विचिन्तय ॥ ५३ ॥ ५४ ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायाम्महावाक्यरत्नावलिटीकायाम्प्रभाभिधानायामुपदेशवाक्यविवरणं सम्पूर्णम् ॥
आहत्य पञ्चोत्तरद्विशतानि वाक्यानि ॥ २०५ ॥



# अथ जीवब्रह्मैक्यवाक्यानि ।

स यश्चायं पुरुषे ॥ १ ॥
यश्चासावादित्ये ॥ २ ॥
स एकः ॥ ३ ॥
सत्यमात्मा ब्रह्मैव ब्रह्मात्मैवात्र ह्येव न विचिकित्स्यम् ॥ ४ ॥
त्वं ब्रह्मासि ॥ ५ ॥
अहं ब्रह्मास्मि ॥ ६ ॥
आवयोरन्तरं न विद्यते त्वमेवाहमहमेव त्वम् ॥ ७ ॥
गताः कलाः पञ्चदशप्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ॥ ८ ॥

---

उपदेशमहावाक्यजातार्थं यथावदजानता प्रत्यक् परभेदप्रसक्तौ तन्निराकरणाय साङ्गोपाङ्गिकजीवब्रह्मैक्यवाक्यानि उच्यन्ते यश्चेत्यादिना य सर्वान्तरत्वेन प्रसिद्ध स चायं पुरुषे जीवसमूहे प्रत्यक्त्वेन प्रतिष्ठित यश्चासावादित्ये आदित्योपलक्षितदेवताकदम्बे च परमात्मतया ईश्वररूपेण प्रतिष्ठित यस्य तत्पदार्थत्वेन जीवबृन्देशे प्रतिष्ठित सोऽयमुभावचोपाधिराहित्यादेक एव "एकमेवाद्वितीयम्" इतिश्रुते ॥ १ ॥ २ ॥ ३ ॥

आत्मा ब्रह्मैव ब्रह्मात्मैवेति यत तत्सत्यमत्र हि न विचिकित्स्यम् संशयो न कार्यं 'तत्त्वमसि अहं ब्रह्मास्मीति' श्रुते ॥ ४ ॥

हे शिष्य देहत्रयावभासकस्त्वमेव निर्विशेषब्रह्मासि ॥ ५ ॥

हे गुरो भवत्कृपयाहं प्रत्यगभिन्न ब्रह्मास्मीति शिष्यस्याध्यवसाय ॥ ६ ॥

स्वभक्तिसाधनाय भक्त प्रति भगवानेवमाह त्वमिति यस्त्व भक्तोऽसि सोऽहं भगवानहमेव त्वमावयोरन्तरं न विद्यते आवयोर्भेदहेतुस्याज्ञानाभावादित्यर्थ ॥ ७ ॥

प्राणश्रद्धाकाशवायुज्योतिरप्पृथिवीन्द्रियमनोऽन्नवीर्यतपोमन्त्रकर्मलोकनामानीति षोडशकला । "स प्राणमसृजत प्राणाच्छ्रद्धाम्' इत्यादिप्रश्नोपनिषदुक्तषोडशकलामध्ये कर्मव्यतिरिक्ता. पञ्चदश-

कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥ ९॥
येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च ॥ १० ॥
स्वाद्वस्वादु विजानाति तत्प्रज्ञानमुदीरितम् ॥ ११ ॥
चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु ॥ १२ ॥
चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि ॥ १३ ॥
परिपूर्णः परात्मास्मिन् देहे विद्याधिकारिणि ॥ १४ ॥
बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ॥ १५ ॥
स्वतः पूर्णः परात्मात्र ब्रह्मशब्देन वर्णितः ॥ १६ ॥
अस्मीत्यैक्यपरामर्शात्तेन ब्रह्म भवाम्यहम् ॥ १७ ॥

---

कलाः कर्मणोऽग्रे प्रतिपादनात् प्रतिष्ठाः स्वस्वप्रकृतीर्गताः संसर्गविशेषं गता न तु लीना इत्यर्थः। देवा घ्राणादीन्द्रियाणि तदधिष्ठातृदेवतास्तु गताः संसर्गविशेषं गता न तु लीना इत्यर्थः इन्द्रियादीनामाकल्पस्थायित्वात्। कर्माणि अदत्तफलानि विज्ञानमय आत्मा जीवात्मा च सर्वे अव्ययेऽक्षरे एकीभवन्ति लीना भवन्तीत्यर्थः ॥ ८ ॥ ॥ ९ ॥

येनेति येन चक्षुरादिप्रवृत्तिनिमित्तेनायं लोकः रूपजातमीक्षते शब्दजातं शृणोति गन्धजातमिदं जिघ्रति शब्दजातञ्च व्याकरोति स्वाद्वस्वादुरसभेदं विजानातीति तत्प्रज्ञानं ब्रह्मोदीरितम् कथितं प्रज्ञानं ब्रह्मेति श्रुतेः ॥ १० ॥ ११ ॥

यतः ब्रह्मेन्द्रादिदेवेषु मनुष्याश्वगवादिषु च आकाशवदनुगतम् एकं चैतन्यं ब्रह्मैव अतः मय्यपि विद्यमानं प्रज्ञानं ब्रह्मैवेत्यर्थः॥१२॥१३॥

आकाशवत्पूर्णः परमात्मा ब्रह्मविद्याधिकारिणि अस्मिन् स्थूलदेहे बुद्धेः बुद्ध्युपलक्षितलिङ्गशरीरस्य साक्षित्वेन स्थित्वा स्फुरन् प्रकाशमानः अहमितीर्यते अहंशब्देनोच्यते ॥ १४ ॥ १५ ॥

अत्र संसारे स्वतः पूर्णः परात्मा शुद्धचैतन्यं ब्रह्मशब्देन वर्णितः अस्मीत्यैक्यपरामर्शात् तेन अनुसन्धानेन अहं ब्रह्म भवामि जीवो ब्रह्म भवतीति भावः एतावता ग्रन्थसन्दर्भेण अहं ब्रह्मास्मीति महावाक्यार्थो दर्शितः ॥ १६ ॥ १७ ॥

एकमेवाद्वितीयं सन्नामरूपविवर्जितम् ॥ १८ ॥
सृष्टेः पुराधुनाप्यस्य तादृक् त्वं तदितीर्यते ॥ १९ ॥
श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वंपदेरितम् ॥ २० ॥
एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ॥ २१ ॥
स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् ॥ २२ ॥
अहङ्कारादिदेहान्तात्प्रत्यगात्मेति गीयते ॥ २३ ॥
दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते ॥ २४ ॥
ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥ २५ ॥
मायाविद्ये विहायैव उपाधी परजीवयोः ॥ २६ ॥

---

तत्त्वमसीति श्रुत्यर्थं श्रुतिः प्रकाशयति वाक्यचतुष्टयेन एकमेवाद्वितीयं सजातीयविजातीयस्वगतभेदरहितं नामरूपविवर्जितं सत् ब्रह्म अस्यजगत उत्पत्तेः पुराधुनापि प्रलयानन्तरमपि तादृक्त्वं निर्विशेषब्रह्मतत्त्वं तत्पदलक्ष्यमितीर्यते कथ्यते ॥ १८ ॥ १९ ॥

अत्रास्मिन् तत्त्वमस्यादिवाक्ये सर्ववेदान्तार्थश्रोतुरधिकारिणः देहेन्द्रियातीत वस्तु त्वं पदेन ईरितं कथितं त्वंपदलक्ष्यमिति श्रुत्या प्रतिपादितमितिभावः असीत्यनेन एकता तत्त्वंपदलक्ष्ययोरैक्यं प्राह्यते तत् तस्मादैक्यमनुभूयताम् शिष्येण तत्त्वमसीति वाक्यश्रवणानन्तरम् लब्धात्मज्ञानेन अहंब्रह्मास्मीत्यनुसन्धानं कर्त्तव्यमितिभावः॥२०॥२१॥

अयमात्मा ब्रह्मेति श्रुत्यर्थं श्रुतिर्विशदयति वाक्यचतुष्टयेन अयमित्युक्तितः स्वप्रकाशापरोक्षत्वं स्वप्रकाशत्वम् अपरोक्षत्वं मतम् सिद्धम् आत्मेत्युक्त्या अहङ्कारादिदेहान्तप्रपञ्चाद्भिन्नः प्रत्यगात्मेति गीयते कथ्यते ॥ २२ ॥ २३ ॥

दृश्यमानस्य सर्वस्य जगतः तत्त्वं ब्रह्मशब्देनेर्यते कथ्यते तत् ब्रह्म स्वप्रकाशात्मरूपकम् ॥ २४ ॥ २५ ॥

परजीवयोः परमात्मजीवात्मनो मायाविद्ये उपाधी विहायैव

अखण्डं सच्चिदानन्दं परं ब्रह्म विलक्ष्यते ॥ २७ ॥
हकारः खेचरीप्रोक्तस्त्वंपदञ्चेति निश्चितम् ॥ २८ ॥
सकारः परमेशः स्यात्तत्पदञ्चेति निश्चितम् ॥ २९ ॥
सकारो ध्यायते जन्तुर्हकारो हि भवेद्ध्रुवम् ॥ ३० ॥
आद्योरात्तत्पदार्थः स्यान्मकारस्त्वंपदार्थवान् ॥ ३१ ॥
तयोः संयोजनमसीत्यर्थं तत्त्वविदोविदुः ॥ ३२ ॥
नमस्त्वमर्थो विज्ञेयो रामस्तत्पदमुच्यते ॥ ३३ ॥
असीत्यर्थे चतुर्थी स्यादेवं मन्त्रेषु योजयेत् ॥ ३४ ॥
क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले ॥ ३५ ॥
संयुक्तमेकतां याति तथात्मन्यात्मविन्मुनिः ॥ ३६ ॥

---

अखण्डं सच्चिदानन्दं परं ब्रह्म विलक्ष्यते स्वमात्रमवशिष्यते इति भावः ॥ २६ ॥ २७ ॥

हमिति हकारः खेचरी प्रोक्तः त्वंपदार्थ इति निश्चितः सकारः परमेशः परमात्मा स्यात् तत्पदार्थ इति निश्चितः । हकारो जन्तुर्जीवः हीति निश्चयेन ध्यायते स्वस्वरूपमितिशेषः तद्ध्यानात् ध्रुवं सकारः परमात्मा उभयोरैकत्वात् ब्रह्मस्वरूपो भवेत् भवतीत्यर्थः । "खेचर्यां खेचरीयुञ्जन्" इतिश्रुतेः हकारसकारयोः खेचरीत्वसिद्धिः अत्र हंस-शब्दो विलोमेन तत्त्वमोरर्थं प्रतिपादयति ॥ २८ ॥ २९ ॥ ३० ॥

आद्यो रेफस्तत्पदलक्ष्यार्थः अपरो मकारस्त्वंपदलक्ष्यार्थः ॥ तयोः संयोजनमसिपदार्थः रामशब्देन जीवात्मपरमात्मनोरभेद एव बोद्ध्यते इति रामशब्दार्थं तत्त्वज्ञा विदुः ॥ ३१ ॥ ३२ ॥

नमः शब्देन त्वं पदार्थो विज्ञेयः रामस्तत्पदार्थ उच्यते चतुर्थी असीत्यर्थे स्यात् तयोरभेदश्चतुर्थ्यर्थ इति भावःएवं मन्त्रेषु सर्वमन्त्रेषु योजयेत् जीवात्मपरमात्मनोरैक्यं भावयेत् ॥ ३३ ॥ ३४ ॥

यथा क्षीरादिपदार्थः क्षीरादिषु संयुक्तः एकत्वं याति तथा आत्म-विन्मुनिः आत्मनि लग्नः एकत्वं याति ब्रह्मैव भवतीत्यर्थः ॥३५ ॥ ३६॥

यथाव्योम व्योमैव भवतिस्वयम् ॥ ३७ ॥
तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित्स्वयम् ॥ ३८ ॥

ओं तत्सदिति साद्धान्तिकजीवब्रह्मैक्यवाक्यानि महावाक्यरत्नावल्यां पञ्चमकरणेऽष्टत्रिंशत् ॥ ३८ ॥



यथा घटे नष्टे तद्गतव्योम स्वयं व्योमैव भवति तथोपाधिविलये शरीरनाशे ब्रह्मवित्स्वयं ब्रह्मैव भवतीत्यर्थः ॥ ३७ ॥ ३८ ॥

इति मैथिलश्रोत्रियलोकनाथमिश्रप्रणीतायां महावाक्यरत्नावलिटीकायाम्प्रमाभिधानायाञ्जीवब्रह्मैक्यवाक्यविवरणं सम्पूर्णम् ॥ आहत्य त्रिचत्वारिंशदुत्तरद्विशतवाक्यानि ॥ २४३ ॥



# अथ साद्धान्तिकमननवाक्यानि ।

अहमन्नमहमन्नमहमन्नम् ॥ १ ॥
अहमन्नादोऽहमन्नादोऽहमन्नादः ॥ २ ॥
अहंमनुरभवं सूर्यश्च ॥ ३ ॥
अहमेवेदं सर्वमसानि ॥ ४ ॥
यथा फेनतरङ्गादि समुद्रादुत्थितं पुनः ॥ ५ ॥
समुद्रे लीयते तद्वज्जगन्मय्यनुलीयते ॥ ६ ॥
अनात्मदृष्टेरविवेकनिद्रामहंममस्वप्नगतिं गतोऽहम् ॥ ७ ॥
स्वरूपसूर्येऽभ्युदिते स्फुटोक्तैर्गुरोर्महावाक्यपदैः प्रबुद्धः ॥ ८ ॥
प्राणाश्चलन्तु तद्धर्म्मैः कामैर्वा हन्यतां मनः ॥ ९ ॥
आनन्दबुद्धिपूर्णस्य मम दुःखं कथं भवेत् ॥ १० ॥

---

जीवन्मुक्त्युपायभूतमननप्रकारं वक्तुं मननवाक्यान्याह अहमन्नमित्यादि। अन्नमहमन्नपुनरुक्तिर्भोग्यमात्रस्यात्मरूपतामननदार्ढ्याय। अन्नादः अन्नभोक्ता तद्भोक्तृत्वरूपेणाहमेव वर्त्ते इत्यर्थः अत्रापि पुनरुक्तिरात्मनि सर्वभोक्तृरूपतामननदार्ढ्यायेत्यवसेयम् ॥ अहं मनुरभवम् सूर्यश्च चकाराच्चन्द्रतारकादयोपि मत्तो न भिद्यन्ते इतिभावः ॥ इदं सर्वं विकल्पितमहमेवासानि भवानीत्यर्थः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

यथा समुद्रात् उत्थितः फेनतरङ्गादिः तत्रैव लीयते तथा मदज्ञानादुत्थितंजगन्मय्यनुलीयते मयि लीनं भवति ॥ ५ ॥ ६ ॥

अनात्मदृष्टेरनात्मनि देहादौ आत्माहंभावस्य पुरात्मानात्माविवेकनिद्रासमुद्भूतां निद्रामहं प्राप्य देहादावहंममेतिस्वप्नगतिं गतवानस्मि इदानीन्तु स्फुटोक्तैः गुरूपदिष्टैरित्यर्थः तत्त्वमस्यादिमहावाक्यपदैः स्वरूपसूर्ये अभ्युदिते सति ब्रह्माहमस्मीतिप्रबुद्धोविगतस्वप्नोऽस्मीत्यर्थः ॥ ७ ॥ ८ ॥

तद्धर्म्मैः तेषां प्राणानां धर्म्मैः निश्वासोच्छ्वासादिभिः दशप्राणाश्चलन्तु गच्छन्तु वा मनः कामैः कामसङ्कल्पादिवृत्तिभिः हन्यताम् बध्यताम् आनन्दबुद्धिपूर्णस्य देहत्रयरहितस्य मम देहनिबन्धनं दुःखं कथं भवेदित्यर्थः ॥ ९ ॥ १० ॥

न मे बन्धो न मे मुक्तिर्न मे शास्त्रं न मे गुरुः ॥ ११ ॥
मायामात्रविकासत्वान्मायातीतोऽहमद्वयः ॥ १२ ॥
आत्मानमञ्जसा वेद्मि क्वाप्यज्ञानं पलायितम् ॥ १३ ॥
कर्तृत्वमपि मे नष्टं कर्त्तव्यं वापि न क्वचित् ॥ १४ ॥
ब्राह्मण्यं कुलगोत्रे च नामसौन्दर्यजातयः ॥ १५ ॥
स्थूलदेहगता ह्येते स्थूलाद्भिन्नस्य मे नहि ॥ १६ ॥
क्षुत्पिपासान्ध्यबाधिर्यकामक्रोधादयोऽखिलाः ॥ १७ ॥
लिङ्गदेहगता ह्येते ह्यलिङ्गस्य न विद्यते ॥ १८ ॥
जडत्वप्रियमोदत्वधर्माः कारणदेहगाः ॥ १९ ॥
न सन्ति मम नित्यस्य निर्विकारस्वरूपिणः ॥ २० ॥
चिद्रूपत्वान्न मे जाड्यं सत्यत्वान्नानृतं मम ॥ २१ ॥
आनन्दत्वान्न मे दुःखमज्ञानाद्भाति सत्यवत् ॥ २२ ॥

---

मम बन्धमोक्षौ न स्तः तत्साधनीभूतगुरुशास्त्रादिकं नास्ति मायामात्रविकासत्वात् बन्धादीनां मायिकत्वादहमद्वयोऽतोमायातीतोऽस्मीत्यर्थः ॥ ११ ॥ ॥ १२ ॥

आत्मानमञ्जसा अनायासेन स्वं ब्रह्मास्मीति वेद्मि ममाज्ञानं क्वापि कुत्रचित् पलायितं तथा कर्तृत्वमपि मम नष्टम् वा इदानीं क्वचित् कुत्रापि कर्त्तव्यमपि न विद्यते ॥ १३ ॥ १४ ॥

ब्राह्मणत्वादयो धर्माः स्थूलदेहगताः स्थूलाद्भिन्नस्य मम एते पूर्वोक्ता धर्मा न विद्यन्ते ॥ १५ ॥ १६ ॥

अखिलाः क्षुत्पिपासादयो गुणाः प्राणेन्द्रियान्तःकरणगोचराः लिङ्गदेहगता भवन्ति एते पूर्वोक्ता गुणा अलिङ्गस्य मम न विद्यन्ते ॥ १७ ॥ ॥ १८ ॥

जाड्यप्रियत्वमोदत्वधर्माः कारणदेहगता भवन्ति नित्यस्य निर्विकारस्वरूपिणः मम एते धर्मा न सन्ति ॥ १९ ॥ ॥ २० ॥

मम चिद्रूपत्वात् जाड्यं न मम सत्यत्वात् अनृतं न मम आनन्दरूपत्वात् दुःखं न अज्ञानात् पूर्वोक्तं सर्वं सत्यवद्भाति ॥ २१ ॥ २२ ॥

नाहं देहो जन्ममृत्यू कुतो मे नाहं प्राणः क्षुत्पिपासे कुतो मे ॥२३॥
नाहं चेतः शोकमोहौ कुतो मे नाहं कर्त्ता बन्धमोक्षौ कुतो मे ॥२४॥
आनन्दयन्तं निजमाश्रयन्तमाशापिशाचीमवमानयन्तम् ॥ २५ ॥
आलोकयन्तं जगदिन्द्रजालमापत्कथं मां प्रविशेदसङ्गम् ॥ २६ ॥
देवार्चनस्नानशौचभिक्षादौ वर्त्ततां वपुः ॥ २७ ॥
तारं जपतु वाक् तद्वत्पठत्वाम्नायमस्तकम् ॥ २८ ॥
विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानन्दे विलीयताम् ॥ २९ ॥
साक्ष्यहं किञ्चिदप्यत्र न कुर्वे नापि कारये ॥ ३० ॥
ज्ञातं ज्ञातव्यमधुना दृष्टं द्रष्टव्यमद्भुतम् ॥ ३१ ॥
विश्रान्तोऽस्मि चिरं श्रान्तश्चिन्मात्रान्नास्ति किञ्चन ॥ ३२ ॥

---

नाहं स्थूलदेहः अतः मम जन्ममृत्यू कुतः जायतेऽस्ति वर्द्धते विपरिणमते अपक्षीयते विनश्यतीति षड्भावविकाराः कुतः नाहं प्राणो भवामि कुतः मम क्षुत्पिपासे भवेताम् नाहं चेतः तदाश्रयशोकमोहौ मम कुतः नहि कर्त्ता भोक्ता वा भवामि तन्निबन्धनबन्धमोक्षौ मम कुतो भवेतामित्यर्थः ॥ २३ ॥ २४ ॥

अन्तः हृदये निजम् आनन्दम् आश्रयन्तम् इदं मे स्यादित्याशापिशाचीं स्वातिरिक्तं नेत्यवमानयन्तम् जगदिन्द्रजालवन्मिथ्येत्यवलोकयन्तम् असङ्गं निर्लेपं सर्वत्र ब्रह्मभावेन वर्त्तमानं मामापत् कथं प्रविशेत् कदाचिन्न स्पृशेदित्यर्थः ॥ २५ ॥ २६ ॥

वपुः शरीरं स्नानशौचदेवार्चनभिक्षादिकर्म्मणि प्रवर्त्तताम् वाक् तारं प्रणवं जपतु तद्वद् आम्नायमस्तकं वेदान्तं पठतु धीः विष्णुं ध्यायतु यद्वा ब्रह्मानन्दे विलीयताम् निमग्ना भवतु । अहं साक्षी अत्र किञ्चिदपि न कुर्वे नापि परैः कारये ॥२७॥२८॥ २९ ॥ ३० ॥

यत् ज्ञातव्यं निर्विशेषं ब्रह्म तदधुना ज्ञातम् अपरोक्षतया यद्द्रष्टव्यं तदद्भुतमहमस्मीति दृष्टम् । अज्ञानदशायां स्वातिरिक्तमस्तीत्यबुद्ध्या चिरं श्रान्तः सन् इदानीन्तु चिन्मात्रादतिरिक्तं किञ्चन नास्तीति मत्वा विश्रान्तोऽस्मि ॥ ३१ ॥ ३२ ॥

न भूतं न भविष्यञ्च चिन्तयामि कदाचन ॥ ३३ ॥
न स्तौमि न च निन्दामि ह्यात्मनोऽन्यन्नहि क्वचित् ॥ ३४ ॥
अलेपकोऽहमजरो नीरागः शान्तवासनः ॥ ३५ ॥
स्वपूर्णात्मातिरेकेण जगज्जीवेश्वरादयः ॥ ३६ ॥
न सन्ति नास्ति माया च तेभ्यश्चाहं विलक्षणः ॥ ३७ ॥
किङ्करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ॥ ३८ ॥
यन्मया पूरितं विश्वं महाकल्पाम्बुना यथा ॥ ३९ ॥
ओं तत्सदिति सार्द्धान्तिकमननमहावाक्यानि महावाक्यरत्नावल्यां सप्तमप्रकरणे ऊनचत्वारिंशत् ॥

---

ब्रह्मातिरेकेण भूतं भविष्यंच शब्दाद्वर्तमानमपि न कदाचन चिन्तयामि न कञ्चन स्तौमि न च निन्दामि आत्मनोऽन्यत् क्वचिदपि न पश्यामि इत्यर्थः ॥ ३३ ॥ ३४ ॥

अहं प्रपञ्चसत्ताविलक्षणत्वात् अलेपकः स्थूलदेहविलक्षणत्वादजरोऽहम् सर्वानर्थहेतुलिङ्गशरीराभावात् नीरागः रागरहितः शान्तवासनः त्यक्तसर्वसंस्कारः ब्रह्मैव भवामीत्यर्थः ॥ ३५ ॥

स्वपूर्णात्मातिरेकेण ब्रह्मातिरेकेण माया नास्ति जगज्जीवेश्वरादयः न सन्ति तेभ्यश्चाहं विलक्षणः सर्वस्मादन्यो विलक्षण इति श्रुतेः ॥ ३६ ॥ ३७ ॥

यथा महाकल्पाम्बुना पृथिवी परिपूरिता तथा मया विश्वं पूरितम् व्याप्तमित्यर्थः । एवं स्थिते कर्त्तव्यकार्याभावात् किं करोमि गन्तव्यप्रदेशाभावात् क्व गच्छामि । विषयसामान्याभावात् किं गृह्णामि किं वा त्यजामि न किमपीत्यर्थः सर्वस्य ब्रह्मस्वरूपत्वात् "नास्त्यनात्मेति निश्चिनु" इति श्रुतेः ॥ ३८ ॥ ३९ ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायाम्महावाक्यरत्नावलिटीकायाम्प्रभाभिधानायाम्मननवाक्यविवरणं संपूर्णम् ॥ आहत्य वाक्यानि द्व्यशीत्युत्तरद्विशतम् ॥ २८२ ॥

# अथ जीवन्मुक्तिवाक्यानि ।

स तत्र पर्येति जक्षन् क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा वयस्यैर्वा नोपजनं स्मरन्निदं शरीरम् ॥ १ ॥

स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीडः आत्ममिथुन आत्मानन्दः स्वराड् भवति ॥ २ ॥

तेदेवाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च ससाधनेभ्यो व्युत्थाय निरागारा निष्परिग्रहा अशिखा अयज्ञोपवीता अन्धा बधिरा मुग्धाः क्लीबा मूका उन्मत्ता इव परिवर्त्तमानाः शान्ता दान्ता उपरतास्तितिक्षवः समाहिता आत्मरतय आत्मक्रीडा आत्म-

---

मननसंस्कृतचेतसां जीवद्दशायस्यमुक्तिप्रकाशाय साक्षान्तिकजीवन्मुक्तिवाक्यानि लिख्यन्ते स तत्रेत्यादिना ॥ यदृच्छया प्राप्तफलं जक्षन् भक्षयन् स्त्रीभिर्वा क्रीडन् यानैः वाहनैः ज्ञातिभिः वा वयस्यैः मित्रैः रममाणः उपजनं स्त्रीपुरुषयोरुपभोगेन जायते यत्तदिदं शरीरं न स्मरन् यः स ब्रह्मवित् तत्र स्वे महिम्नि पर्येति परिसमन्ताद्वर्तते जीवन्मुक्तः पर्येति भावः ॥ १ ॥

स वा एष ब्रह्मवित् एव आत्मानमेव पश्यन् एवं भेदमतीति मन्वानः एवमवास्तवं विजानन्नपि आत्मन्येव रतिः रमणं यस्य स आत्मन्येव क्रीडा विनोदो यस्य स आत्मैव मिथुनं युगलं यस्य स जीवात्मपरमात्मनोरैक्यस्वात्मथानन्दसिद्धिः आत्मरूपत्वेन सर्वत्र नन्दतीत्यात्मानन्दः स विद्वान् स्वयमेव राजते इति स्वराड् भवति ॥ २ ॥

स्वाश्रमाचारलक्षणाभ्यः ससाधनाभ्यः पुत्रवित्तलोकैषणाभ्यो व्युत्थाय ससाधनैषणात्रयसंन्यासं कृत्वा निरागाराः अनिकेतनाः निष्परिग्रहाः शरीरधारणेतरपरिग्रहशून्याः अशिखाः अयज्ञोपवीताः ब्रह्मातिरिक्तरूपाग्रहणादन्धाः तथा शब्दाग्रहणाद्बधिराः मुग्धाः विषयेभ्यो वैचित्यमुपगताः कन्यायुवतिजरठासु विकाररहिताः क्लीबाः लौकिकवार्त्तासु मूका उन्मत्ता इव लक्ष्यैकतानचित्ततया परिवर्त्तमानाः शान्ताः निगृहीतान्तरेन्द्रियाः दान्ताः निगृहीतबाह्येन्द्रियाः उपरता

मिथुना आत्मानन्दाः प्रणवमेव परं ब्रह्मात्मप्रकाशं शून्यं जानन्तस्तत्रैव परिसमाप्ताः ॥ ३ ॥

कुचेलोऽसहाय एकाकी समाधिस्थ आत्मकाम आप्तकामो निष्कामो जीर्णकामो हस्तिनि सिंहे दंशे मशके नकुले सर्पराक्षसगन्धर्वे मृत्योरूपाणि विदित्वा न बिभेति कुतश्चनेति ॥ ४ ॥

सर्वधर्मान् परित्यज्य निर्ममो निरहङ्कारो भूत्वा ब्रह्मिष्ठं शरणमुपगम्य तत्त्वमसि सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चनेत्यादि महावाक्यार्थानुभवज्ञानाद्ब्रह्मैवाहमस्मीति निश्चित्य नि-

---

निवृत्ताः तितिक्षवः शीतोष्णादिद्वन्द्वसहिष्णवः समाहिताः एकाग्रमनसः आत्मरतयः आत्मक्रीडा आत्ममिथुना आत्मानन्दाः पूर्वं व्याख्याताः सोऽहमित्याकारकभावनाभावितान्तःकरणाः प्रणवमेव परं ब्रह्मात्मप्रकाशम् अतिरिक्तशून्यमिति जानन्तः तत्रैव ब्रह्मण्येव परिसमाप्ताः तद्भावमापन्नास्ते देवाः प्रजापतिशिष्या इत्यर्थः ॥ ३ ॥

जीर्णकौपीनकन्थाधारणात्कुचेलः स्वदेहातिरिक्तसहायाभावादसहायः अत एवैकाकी समाधौ स्थितत्वात्समाधिस्थः स्वात्मनात्मानमेवैनं कामयते इत्यात्मकामः सर्वकामनाप्राप्तेराप्तकामः अत एव निष्कामः जीर्णः कामः क्षुत्पिपासानिवर्तकविषयातिरिक्तविषयानभिलाषो यस्य स तथोक्तः परिव्राट् अखिलाभिमानत्यागपूर्वकं हस्तिसिंहदंशमशकनकुलसर्पराक्षसगन्धर्वादिषु प्रज्ञानां भयहेतुष्वपि भीहेतुत्वातिरिक्तदृष्टिम् आत्मज्ञानखड्गेन मारयतीति मृत्युस्तस्य मृत्योर्निर्विशेषचैतन्यस्य स्वरूपाणि विदित्वा कुतश्चन कस्मादपि न बिभेति भयहेतुद्वैतस्याप्रमाभावादित्यर्थः " सर्वात्मभावनायुक्तं योगिनं सर्वजन्तवः । स्वात्मत्वेनैव पश्यन्ति न द्विषन्त्यात्मरूपत " इति स्मृतेः ॥ ४ ॥

यः यतिः सर्वधर्मान् परिणामे स्वर्गादिरूपबन्धनहेतून् परित्यज्य दण्डकमण्डल्वादावपि ममेदमित्यभिमानरहितः निर्ममः देहेन्द्रियाद्यै निरहङ्कारो भूत्वा ब्रह्मप्रापकतया ब्रह्मिष्ठं स्वाचार्यं शरणमुपगम्य तन्मुखतस्तत्त्वमसि सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चनेत्यादि-

विकल्पकसमाधिना स्वतन्त्रो यतिश्चरति स सन्न्यासी स मुक्तः स पूज्यः स योगी स परमहंसः सोऽवधूतः स ब्राह्मण इति ॥५॥

जीवः पञ्चविंशकः स्वकल्पितचतुर्विंशतितत्त्वं परित्यज्य षड्विंशकपरमात्माहमिति निश्चयात् जीवन्मुक्तो भवति ॥ ६ ॥

तुरीयमक्षरमिति ज्ञात्वा जागरिते सुषुप्त्यवस्थापन्न इव यच्छ्रुतं यद्दृष्टं तत्सर्वमविज्ञातमिव यो वसेत्तस्य स्वप्नावस्थायामपि तादृगवस्था भवति सजीवन्मुक्तो भवति ॥ ७ ॥

सकृद्विभातसदानन्दानुभवैकगोचरो ब्रह्मवित् विद्वांश्चक्षुरादि बाह्यप्रपञ्चोपरतः सर्वं जगदात्मत्वेन पश्यन्नात्मेति भावयन् कृतकृत्यो भवति ॥ ८ ॥

---

महावाक्यार्थानुभवज्ञानात् निर्विकल्पकसमाधिना ब्रह्मैवाहमस्मीति निश्चित्य स्वतन्त्रश्चरति स सन्न्यासी स मुक्तः जीवन्मुक्तः स पूज्यः स एव योगी स परमहंसः परिव्राजकः स एव मुख्योऽवधूतः स ब्राह्मणो ब्रह्मविद्वरिष्ठो भवतीत्यर्थः ॥ ५ ॥

पञ्चविंशकतत्त्वात्मको जीवः वियदादिपञ्चकं प्राणादिपञ्चकं ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकम् अन्तःकरणचतुष्टयञ्चेति स्वकल्पितानि चतुर्विंशतिसंख्यकानि तत्त्वानि परित्यज्य चतुर्विंशतितत्त्वाधारतया षड्विंशकपरमात्माहमिति निश्चयाज्जीवन्मुक्तो भवति॥६॥

तुरीयं चतुर्थं ब्रह्म न क्षरतीत्यक्षरमिति ज्ञात्वा जागरिते जाग्रदवस्थायां यद्यच्छ्रुतं यद्यद्दृष्टं तत्सर्वम् अविज्ञातमिव सुषुप्त्यवस्थापन्न इव यः वसेत् तस्य ब्रह्मविदः स्वप्नावस्थायामपि तादृगवस्था भवति यया यया स जीवन्मुक्तो भवति ॥ ७ ॥

सकृद्विभातीति सकृद्विभातो यः सदानन्दस्तदनुभव एव एकगोचरो विषयो यस्य स ब्रह्मवित् विद्वान् चक्षुरादीनां बाह्यप्रपञ्चेभ्यो बाह्यविषयेभ्य उपरतो निवृत्तः सर्वं जगदात्मत्वेनात्मस्वरूपत्वेन पश्यन्नात्मेति भावयन् कृतकृत्यो जीवन्मुक्तो भवतीत्यर्थः ॥ ८ ॥

निर्द्वन्द्वः सदाचञ्चलगात्रः परमशान्तिं स्वीकृत्य नित्यशुद्धः परमात्माहमेवेत्यखण्डानन्दः पूर्णः कृतार्थः परिपूर्णपरमाकाशमग्नमनाः प्राप्तोन्मन्यवस्थः सन्न्यस्तसर्वेन्द्रियवर्गोऽनेकजन्मार्जितपुण्यपुञ्जपरिपक्वकैवल्यफलोऽखण्डानन्दनिरस्तसर्वक्लेशकश्मलो ब्रह्माहमस्मीति कृतकृत्यो भवति ॥ ९ ॥

ब्रह्मैवाहमस्मीत्यनवरतंब्रह्मप्रणवानुसन्धानेन यः कृतकृत्यो भवति स परमहंसपरिव्राट् ॥ १० ॥

भावाभावकलाविनिर्मुक्तः सर्वसंशयध्वस्तः
पूर्णाहंभावः कृतकृत्यो भवति ॥ ११ ॥

---

ब्रह्मवित् शीतोष्णसुखदुःखादिभावाभावान्निर्द्वन्द्वः विषयप्रेरणाराहित्यात्सदा अचञ्चलगात्रः स्वातिरिक्तवस्त्वभावात् परमशान्तिं स्वीकृत्य शान्तिप्रपन्नो भूत्वा नित्यशुद्धस्वरूपः परमात्माहमेवेति दृढानुभवात् अखण्डानन्दः पूर्णः व्यापकः स्वकर्तव्यार्थाभावात् कृतार्थः परिपूर्णपरमाकाशे ब्रह्मणि मग्नं लीनं मनो यस्य स तथोक्तः प्राप्ता उन्मन्यवस्था अमनस्कदशा येन स तथोक्तः सन्न्यस्तस्त्यक्तः सर्वेन्द्रियवर्गः सर्वेन्द्रियविषयः सर्वशब्दविषयलक्षकः येन स तथोक्तः अनेकजन्मार्जितपुण्यपुञ्जपरिपाकात्सञ्जातं कैवल्यफलं यस्य स तथोक्तः अखण्डानन्दानुभवेन निरस्तं सर्वक्लेशकश्मलं दुःखजातं यस्य स तथोक्तः ब्रह्माहमस्मीति कृतकृत्यो जीवन्मुक्तो भवतीत्यर्थः ॥ ९ ॥

अनवरतं ब्रह्मरूपप्रणवानुसन्धानेन ब्रह्मैवाहमस्मीति ज्ञानात् कृतकृत्यो भवति यः स परमहंसपरिव्राट् जीवन्मुक्तो भवतीत्यर्थः ॥१०॥

भावकला ज्ञानेन्द्रियग्राह्यशब्दादिविषयपञ्चकरूपिणी अभावकला अन्तःकरणवृत्तिसमूहः ताभ्यां विनिर्मुक्तः अहं देहो जीवो वा ईश्वरो वेति सर्वसंशयः ध्वस्तो यस्य स तथोक्तः पूर्णब्रह्मभावमापन्नत्वादहमेवेदं सर्वमिति पूर्णाहंभावारूढः कृतकृत्यो जीवन्मुक्तो भवतीत्यर्थः॥ ११ ॥

प्राणो ह्येष सर्वभूतैर्विभाति विजानन्विद्वान् भवते नातिवादी ॥१२॥
आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ॥ १३ ॥
निमिषार्द्धं न तिष्ठन्ति वृत्तिं ब्रह्ममयीं विना ॥ १४ ॥
यथा तिष्ठन्ति ब्रह्माद्याः सनकाद्याः शुकादयः ॥ १५ ॥
अध्यात्मरतिरासीनो निरपेक्षो निराशिषः ॥ १६ ॥
सर्वद्वन्द्वैर्विनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ॥ १७ ॥
कपालं वृक्षमूलानि कुचेलान्यसहायता ॥ १८ ॥
समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥ १९ ॥
स्वप्नेऽपि यो हि युक्तः स्यात् जाग्रतीव विशेषतः ॥ २० ॥

---

प्राणः परमात्मा एषः सर्वभूतैः ब्रह्मादिस्तम्बपर्यन्तैरुपलक्षितो विभाति विद्वान् आत्मानमयमहमस्मीति विजानन् नातिवादी भवते भवति अतिक्रम्य सर्वान् वदितुं शीलमस्येत्यतिवादी न भवति मितभाषी भूत इत्यर्थः ॥ १२ ॥

दारादिनैरपेक्ष्येण स्वात्मन्येव क्रीडा रतिर्ध्यानादिक्रिया यस्य सोऽयमात्मक्रीडः आत्मरतिः क्रियावान् एष विद्वान् ब्रह्मविदां वरिष्ठः जीवन्मुक्तो भवतीत्यर्थः ॥ १३ ॥

शुकादिब्रह्मर्षयः सनकादयःनित्यमुक्ता ब्रह्मादिदेवाश्च निमिषार्द्धमपि ब्रह्ममयीं वृत्तिं विना यथा न तिष्ठन्ति तथा जीवन्मुक्ता अपि न तिष्ठन्ति ॥ १४ ॥ १५ ॥

यः अध्यात्मशास्त्रसिद्धान्तप्रीतिः आसीन उपविष्टः अपेक्षणीयविषयाभावात् निरपेक्षः निराशिषः निर्गतसङ्कल्पजालः शीतोष्णादिसर्वद्वन्द्वैर्विनिर्मुक्तो विद्वान् ब्रह्मण्येवावतिष्ठते ब्रह्मभावेनैव तिष्ठतीत्यर्थः ॥ १६ ॥ १७ ॥

परिव्राड्भावमापन्नस्य मुनेः किं लक्षणमित्याह कपालं जलपात्रं निवासाय वृक्षमूलानि शीतनिवारणाय कुचेलानि कन्थाकौपीनादीनि भयराहित्यादसहायता सर्वत्र सच्चिदानन्द ब्रह्मभावनया समता तुल्यता चैवैतत्सर्वं जीवन्मुक्तस्य लक्षणम् ॥ १८–१९ ॥

जाग्रति जाग्रदवस्थायामिव स्वप्नेऽपि स्वप्नावस्थायामपि यः

ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम् ॥ २१ ॥
निर्मानश्चानहङ्कारो निर्द्वन्द्वश्छिन्नसंशयः ॥२२॥
आत्मक्रीड आत्मरतिरात्मवान् समदर्शनः ॥२३॥
स्मृत्वा स्पृष्ट्वा च भुक्त्वा च दृष्ट्वा ज्ञात्वा शुभाशुभम् ॥२४॥
न हृष्यति ग्लायति यः स शान्त इति कथ्यते ॥२५॥
अप्राप्तं हि परित्यज्य सम्प्राप्ते समतां गतः ॥२६॥
अदृष्टखेदाखेदो यः सन्तुष्ट इति कथ्यते ॥२७॥
नाकृतेन कृतेनार्थो न श्रुतिस्मृतिविभ्रमैः ॥२८॥

---

विशेषतः युक्त समाहितः स्यात् ईदृक्चेष्टः जाग्रत्स्वप्नयोर्ब्रह्माह-मस्मीति मननशीलः ब्रह्मवादिनां श्रेष्ठो वरिष्ठश्च भवती त्यर्थः ॥ २० ॥ २१ ॥

मानापमानराहित्यान्निर्मानः देहादावहङ्काराभावस्यान्निरहङ्कारः शीतोष्णादिद्वन्द्वातीतत्वान्निर्द्वन्द्वः अहंब्रह्मैवेतिनिश्चयात्मकबुद्ध्या छिन्नसंशयः स्वातिरिक्तवनितादनपेक्षतयात्मक्रीडः आत्मन्येवरतिः प्रीतिर्यस्य स आत्मरतिः जीवात्माभिन्नपरमात्माहमस्मीत्यात्मवान् सर्वत्र समदर्शनो जीवन्मुक्तो भवतीत्यर्थः ॥ २२ ॥ २३ ॥

शुभाशुभम् श्रेयोरूपं शुभम् अश्रेयोरूपमशुभञ्च स्वातिरिक्तं नेति स्मृत्वा स्पृष्ट्वा भुक्त्वा दृष्ट्वा परमार्थतो मिथ्येति ज्ञात्वा शुभप्राप्तौ, न हृष्यति अशुभप्राप्तौ न ग्लायति न शोचति एवं यो वर्तते स शान्त इति कथ्यते ॥ २४ ॥ २५ ॥

यदप्राप्तं तदाप्तव्यमितीच्छां परित्यज्य भाग्यवशात् सम्प्राप्ते वस्तुनि एतदेव पर्याप्तमिति समतां गतः । स्वेष्टप्राप्त्यप्राप्त्योर्यो ऽदृष्ट-खेदाखेदो भवति स जीवन्मुक्तः सन्तुष्ट इति कथ्यते ॥ २६ ॥ २७ ॥

ब्रह्मविदः अकृतेन प्रतिषिद्धकर्माचरणेन कृतेन विहितकर्माचर-णेनार्थः प्रयोजनम् न विद्यते तथा श्रुतिस्मृतिविभ्रमैः कर्मोपासनाज्ञा-नकाण्डगोचरश्रुतिस्मृतिभ्रान्तिभिरर्थः प्रयोजनं न विद्यते इत्यर्थः

निर्मन्थन इवाम्भोधिः स तिष्ठति यथा स्थितः ॥२९॥
सम्यग्ज्ञानाववोधेन नित्यमेकसमाधिना ॥३०॥
साङ्ख्य एवावबुद्धा ये ते साङ्ख्या योगिनः स्मृताः ॥३१॥
प्राणाद्यनिलसंशान्तौ युक्त्या ये पदमागताः ॥ ३२ ॥
अनामयमनाद्यन्तं ते स्मृता योगयोगिनः ॥ ३३ ॥
सुखदुःखदशाधीरं साम्यान्न प्रोद्धरन्ति यम् ॥ ३४ ॥
निश्वासा इव शैलेन्द्रं चित्तं तस्य मृतं विदुः ॥ ३५ ॥
वाचामतीतविषयो विषयाशादशोज्झितः ॥ ३६ ॥

---

निर्मन्थन इवाम्भोधिः वाताचलितसागर इव स ब्रह्मवित् यथा पूर्वं प्रयोजनरहितः स्थितः तथा उक्तश्रुतिस्मृतिभ्रांतिभिरनाकुलितस्तिष्ठतीत्यर्थः ॥ २८ ॥ २९ ॥

ये योगिनः सम्यग्ज्ञानाववोधप्रवर्त्तकेन नित्यम् ब्रह्म एकसमाधिना केवलसमाधिना ब्रह्म यत्र संख्यायते ज्ञायते तत्साङ्ख्यं परमाद्वैतशास्त्रमेतस्मिन्नवबुद्धा ज्ञानवन्तस्ते योगिनः साङ्ख्याः जीवन्मुक्ताः स्मृताः ॥ ३० ॥ ३१ ॥

भ्रूमध्ये तारकालोके शान्तावन्तमुपागते। चेतनैकतने बद्धे प्राणस्पन्दो निरुद्धयते " इत्यादिश्रुतिशुद्धगुरूपदिष्टयुक्तया प्राणाद्यनिलसंशान्तौ प्राणादिव्यापारोपरमे ये अनामयं निरुपद्रवम् अनाद्यनन्तं " पदमात्मस्वरूपमागताः लक्ष्यैकतानचित्तास्ते योगयोगिनो जीवन्मुक्ताः स्मृता इत्यर्थः ॥ ३२ ॥ ३३ ॥

यथा शैलेन्द्रं मेरुं निश्वासोच्छ्वासा न चालयन्ति तथा सुखदुःखदशाः शीतोष्णसुखदुःखाद्यो यं धीरं ब्रह्मनिष्ठं साम्यात् समभावात् न प्रोद्धरन्ति चालयन्ति तस्य ब्रह्मनिष्ठस्य चित्तं मृतमिति विदुः स जीवन्मुक्त इत्यर्थः ॥ ३४ ॥ ३५ ॥

यतो वाचो निवर्त्तन्ते इति श्रुत्यनुरोधेन वाङ्मनसवृत्तीनामतीतं ब्रह्मैव विषयो यस्य स तथोक्तः विषयाशादशा उज्झिता येन स तथोक्तः यः परानन्दरसालुब्धः परानन्दरसास्वादनेन विषयानन्दं प्रत्यलुब्ध-

परानन्दरसालुब्धो रमते स्वात्मनात्मनि ॥ ३७ ॥
निर्ग्रन्थिः शान्तसन्देहो जीवन्मुक्तो विभावनः ॥ ३८ ॥
अनिर्वाणोऽपि निर्वाणश्चित्रदीप इव स्थित : ॥ ३९ ॥
निर्धनोपि सदा तुष्टोऽप्यसहायो महाबलः ॥ ४० ॥
नित्यतृप्तोप्यभुञ्जानोप्यसमः समदर्शनः ॥ ४१ ॥
कुर्वन्नपिन कुर्वाणश्चाभोक्ता फलभोग्यपि ॥ ४२ ॥
शरीर्यप्यशरीरोसौ परिच्छिन्नोपि सर्वगः ॥ ४३ ॥
अध्यात्मरतिरासीनः पूर्णः पावनमानसः ॥ ४४ ॥
नैष्कर्म्येण न तस्यार्थस्तस्यार्थोस्ति न कर्मभिः ॥ ४५ ॥

---

चित्तः अचलितचित्तो भव ते स विद्वान् स्वात्मना अखण्डाकारवृत्ति-मदन्तःकरणेन आत्मनि स्वे महिम्नि रमते ॥ ३६ ॥ ३७ ॥

अहङ्काररूपग्रन्थिर्वह्निसूर्यचन्द्रमण्डलरूपग्रन्थयो वा निर्गता यस्मात् स निर्ग्रन्थिः शान्तसन्देहः विभावनः स्वातिरिक्तभावनारहितः। अयं जीवन्मुक्तः अनिर्वाणोऽपि अप्राप्तकैवल्यमोक्षोऽपि निर्वाणः निर्वाणोऽस्यास्तीति निर्वाणः प्राप्तकैवल्यमोक्ष एवेत्यर्थः यतः जीवन्मुक्तस्येऽपि अस्य कैवल्यमुक्तिसादृश्यमस्ति तदेव दर्शयति चित्रदीप इव स्थितः इति ॥ ३८ ॥ ३९ ॥

निर्धनोऽपि सदैव तुष्टः सहायशून्योऽपि योगमाहात्म्यान्महाबलः अभुञ्जानोपि ब्रह्मामृतरसास्वादान्नित्यतृप्तः असमः असदृशः सर्वत्र समदर्शनः ॥ नित्यादिकर्मकुर्वन्नपि कर्तृत्वाभिमानाभावात् किञ्चिदप्यकुर्वाणः परदृष्ट्या प्रारब्धाभासफलभोग्यपि अभोक्ता स्वदृष्ट्या भोक्ता न भवति ॥ एष योगी शरीरे अपि शरीराभिमानाभावात् अशरीरी परिच्छिन्नोऽपि सोपाधिरपि सर्वगः सर्वगतो भवति अध्यात्मशास्त्ररतिः स्वे महिम्न्यासीनः पूर्णः व्यापकः पावनमानसो जीवन्मुक्तो भवतीत्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥

यस्य ब्रह्मनिष्ठस्य मनः वासनारहितं भवति तस्य कर्मभिः श्रुतिस्मृत्युक्तै नार्थः प्रयोजनमस्ति नैष्कर्म्येण सन्न्यासेन च तस्य नार्थः प्रयोजनम्

न समाधानजाप्याभ्यां यस्य निर्वासनं मनः ॥ ४६ ॥
जगज्जीवादिरूपेण पश्यन्नपि परात्मवित् ॥ ४७ ॥
न तत्पश्यति चिद्रूपं ब्रह्मवस्त्वेव पश्यति ॥ ४८ ॥
अहमन्नं सदान्नाद इति हि ब्रह्मवेदनम् ॥ ४९ ॥
ब्रह्मविद्ग्रसति ज्ञानात् सर्वं ब्रह्मात्मनैव तु ॥ ५० ॥
समाधिमथकर्माणि मा करोतु करोतु वा ॥ ५१ ॥
हृदयेनात्तसर्वेहो मुक्त एवोत्तमाशयः ॥ ५२ ॥
अक्षरत्वाद्वरेण्यत्वाद्धूतसंसारबन्धनात् ॥ ५३ ॥
तत्त्वमस्यादिलक्ष्यत्वादवधूत इतीर्यते ॥ ५४ ॥

---

समाधानं समाधिः जाप्यं प्रणवादिजपस्ताभ्यामपि न प्रयोजनमस्ति जीवन्मुक्तस्य ब्रह्ममात्रदृष्टित्वात् कर्मादिभिः प्रयोजनाभावादित्यर्थः ॥ ४५ ॥ ४६ ॥

परात्मवित् ब्रह्मवित् प्रपञ्चजातं जगज्जीवेश्वरादिरूपेण पश्यन्नपि नहि तत्तथा पश्यति किन्तु ब्रह्मातिरिक्तं न किञ्चिदस्तीति चिद्रूपं ब्रह्मवस्त्वेव पश्यति ब्रह्मातिरिक्तस्यासद्भावात् ॥ ४७ ॥ ४८ ॥

ब्रह्मवित् अहमन्नं कर्मफलं सदान्नादः कर्मफलभोक्ता इत्येव ब्रह्मवेदनं ब्रह्मज्ञानम् तस्मात् ज्ञानात् ब्रह्मात्मनैव ब्रह्मरूपेणैव सर्वं जगत् ग्रसति यच्च स्वयमेवावशिष्यते इतिभावः ॥ ४९ ॥ ५० ॥

हृदयेनात्ता विचारबुद्ध्या त्यक्ताः सर्वेहाः सर्ववासना यस्य स समाधिमथवा कर्माणि श्रुतिस्मृत्युक्तानि करोतु वा मा करोतु सर्वथा उत्तमाशयः मुनिः मुक्त एव जीवन्मुक्त एव भवति ॥ ५१ ॥ ५२ ॥

अवधूतशब्दार्थप्रकाशकहेतुचतुष्टयसत्त्वादवधूतो ब्रह्मविद्वरिष्ठो भवति तथाहि प्रथमवर्णार्थहेतुरक्षरत्वादिति द्वितीयवर्णार्थहेतुर्वरेण्यत्वादिति तृतीयवर्णार्थहेतुर्धूतसंसारबन्धनत्वादिति चतुर्थवर्णार्थहेतुस्तत्त्वमस्यादिलक्ष्यत्वादिति एतेन यत्र धर्मचतुष्टयस्य स्थितिः स एवावधूतः कथ्यते इति फलितम् ॥ ५३ ॥ ५४ ॥

यो विलङ्घ्याश्रमान्वर्णानात्मन्येव स्थितः पुमान् ॥ ५५ ॥
अतिवर्णाश्रमी योगी अवधूतः स कथ्यते ॥ ५६ ॥
यथा रविः सर्वरसान् प्रभुङ्क्ते हुताशनश्चापि हि सर्वभक्तः ।५७।
तथैव योगी विषयान् प्रभुङ्क्ते न लिप्यते पुण्यपापैश्च शुद्धः ।५८।
केवलं सुसमः स्वच्छो मौनी मुदितमानसः ॥ ५९ ॥
सन्तोषामृतपानेन ये शान्तास्तृप्तिमागताः ॥ ६० ॥
आत्मारामा महात्मानस्ते महापदमागताः ॥ ६१ ॥
हर्षामर्षभयक्रोधकामकार्पण्यदृष्टिभिः ॥ ६२ ॥
न हृष्यति ग्लायति यः स जीवन्मुक्त उच्यते ॥ ६३ ॥

---

य पुमान् योगी वर्णान् आश्रमान् विलङ्घ्य अतिक्रम्य आत्मन्येव स्थितो भवति सोऽतिवर्णाश्रमी वर्णाश्रमाचारातीतो ऽवधूतो जीवन्मुक्तो भवति ॥ ५५ ॥ ५६ ॥

यथा रवि सूर्य सर्वरसान् विषयगतरसान् भुङ्क्ते इतीतिनिश्चयेन यथा हुताशनोऽग्निश्चापि सर्वभक्ष च शब्दाद्वायुर्यथा सर्वरसान् शोषयति तथैव योगी विषयान् भुङ्क्ते शुद्ध सन् तद्गतपुण्यपापैर्न लिप्यते अहङ्काराभावादित्यर्थ ॥ ५७ ॥ ५८ ॥

मुदितमानस सदा सन्तुष्टचित्तो मौनी स्वच्छ अतिस्वच्छहृदय केवल ब्रह्म स्वस्वरूपमिति ज्ञात्वा सुसम साम्यमापन्न सन् जीवन्मुक्तो भवतीत्यर्थ ॥ ५९ ॥

ये ब्रह्मविद शान्ता शान्तिमुपगता ब्रह्म स्वस्वरूपमित्यवगमस्तज्ञातेन सन्तोषामृतपानेन तृप्तिमागतास्तृप्ता दारादिनैरपेक्ष्येण आत्मन्येवारमन्त इत्यात्मारामास्ते महात्मान महापद ब्रह्म आगता प्राप्ता भवन्तीत्यर्थ ॥ ६० ॥ ६१ ॥

स्वप्सितविषयलाभजा हर्ष तादृशविषयालाभजोऽमर्ष शोक । भय द्वैतजं क्रोध इद मे स्यादित्यभिलाष काम स्वातिरिक्तास्तित्वज्ञानी कृपण तस्य भाव कार्पण्यम् तथा दृष्टिज्ञान ताभि हर्षादिकार्पण्यान्तज्ञानत, य न हृष्यति न ग्लायति स जीवन्मुक्त उच्यते ६२ ६३

अहङ्कारमयीं त्यक्त्वा वासनां लीलयैव यः ॥ ६४ ॥
तिष्ठति ध्येयसन्त्यागी स जीवन्मुक्त उच्यते ॥ ६५ ॥
मौनवान्निरहंभावो निर्मानो मुक्तमत्सरः ॥ ६६ ॥
यः करोति गतोद्वेगः स जीवन्मुक्त उच्यते ॥ ६७ ॥
यावती दृश्यकलना सकलेयं विलोक्यते ॥ ६८ ॥
सा येन सुष्ठु सन्त्यक्ता स जीवन्मुक्त उच्यते ॥ ६९ ॥
उद्वेगानन्दरहितः समया स्वच्छया धिया ॥ ७० ॥
न शोचते न चोदेति स जीवन्मुक्त उच्यते ॥ ७१ ॥
सर्वेच्छाः सकलाः शङ्काः सर्वेहाः सर्वनिश्चयाः ॥ ७२ ॥
धिया येन परित्यक्ताः स जीवन्मुक्त उच्यते ॥ ७३ ॥

---

देहमात्रोपयोगिकौपीनाच्छादनभिक्षादावपि लीलयैव अनायासेनाहङ्कारममकाररूपां वासनां त्यक्त्वा ध्यातृध्यानादित्रिपुटीत्यागी यस्तिष्ठति स जीवन्मुक्त उच्यते ॥ ६४ ॥ ६५ ॥

मौनवान् मौनी निरहंभावः अहङ्काररहितः निर्मानः मानाभिलापशून्यः मत्सरः अन्यशुभद्वेषः मुक्तो यस्मात् स तथोक्तः गतोद्वेगः निरुद्विग्नः सङ्कल्पवर्जितः देहधारणभिक्षादि कर्म यः करोति स जीवन्मुक्त उच्यते ॥ ६६ ॥ ६७ ॥

अविद्या तत्कार्यरूपिणी यावती या सकलेयं दृश्यकलना संसारः व्यावहारिकत्वेन विलोक्यते अज्ञानिभिः सा येन ज्ञानिना सुष्ठु सन्त्यक्ता सन्न्यस्ता स जीवन्मुक्त उच्यते ॥ ६८ ॥ ६९ ॥

स्वाभीष्टविषयालाभज उद्वेगः स्वाभीष्टविषयलाभज आनन्दः ताभ्यां रहितः समया तुल्यया स्वच्छया धिया न शोचते न चोदेति विषादं हर्षं वा न याति यः स जीवन्मुक्तो भवति ॥ ७० ॥ ७१ ॥

अप्राप्तवस्तुविषयाः सर्वा इच्छाः इदमिदं वा नवेति सकलाः शङ्काः सन्देहाः प्राप्तवस्तुनि पुनः पुनर्भोगव्यापाररूपाः सर्वेहाः देह एवाहं जीव एवाहमित्येवमाकाराः सर्वे निश्चया धिया ब्रह्माकारपरिणतया बुद्ध्या येन परित्यक्ताः स जीवन्मुक्त उच्यते ॥ ७२ ॥ ७३ ॥

जन्मस्थितिविनाशेषु सोदयास्तमयेषु च ॥ ७४ ॥
सममेव मनो यस्य स जीवन्मुक्त उच्यते ॥ ७५ ॥
सर्वाधिष्ठानचिन्मात्रे निर्विकल्पे चिदात्मनि ॥ ७६ ॥
यो जीवति गतस्नेहः स जीवन्मुक्त उच्यते ॥ ७७ ॥
क्रियानाशाद्भवेच्चिन्तानाशोऽस्माद्वासनाक्षयः ॥ ७८ ॥
वासनाप्रक्षयो मोक्षः स जीवन्मुक्त उच्यते ॥ ७९ ॥
निर्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेति कथ्यते ॥ ८० ॥
सा सर्वदा भवेद्यस्य स जीवन्मुक्त उच्यते ॥ ८१ ॥
देहेन्द्रियेष्वहंभाव इदंभावस्तदन्यके ॥ ८२ ॥
यस्य नो भवतः क्वापि स जीवन्मुक्त उच्यते ॥ ८३ ॥

---

उदयास्तमयाभ्यां सहितेषु जन्मस्थितिविनाशेषु चशब्दात्तत्कारणीभूतपुण्यपापेषु यस्य मनः सममेव तुल्यमेव स जीवन्मुक्त उच्यते ॥ ७४ ॥ ७५ ॥

सर्वप्रपञ्चारोपापवादाधिष्ठानचिन्मात्रे निर्विकल्पे चिदात्मनि स्वस्वरूपत्वेन साक्षात्कृते सति सर्वत्र गतस्नेहः सन् यो जीवति स जीवन्मुक्त उच्यते ॥ ७६ ॥ ७७ ॥

फलेच्छया क्रियते इति क्रिया तत्फलेच्छाभावात् क्रियानाशो भवति स्वकर्तव्याभावतया क्रियानाशात्तत्फलचिन्तापि नश्यति अस्याश्चिन्तानाशात्तद्धेतुवासनाक्षयो भवति सर्वानर्थभूतवासनाक्षयाधारो मोक्ष इति यो जानाति स जीवन्मुक्त उच्यते ॥ ७८ ॥ ७९ ॥

जगज्जीवेश्वररूपनानाकल्पना विकल्पः तद्रहिता निर्विकल्पा चिन्मात्रा ज्ञानमात्रस्वरूपा वृत्तिः अन्तःकरणवृत्तिः प्रज्ञाकारेण परिणता प्रज्ञेति कथ्यते यस्य योगिनः सर्वदा सा प्रज्ञा भवेत् स जीवन्मुक्त उच्यते ॥ ८० ॥ ८१ ॥

स्थूलोऽहं कृशोऽहं शृणोमि पश्यामीत्यादिर्देहेन्द्रियेष्वहंभावः तदन्यके क्षेत्रदारादाविदंभावः ममत्वभावः तावुभावपि क्वापि क्वचिदपि यस्य नो भवतः स जीवन्मुक्त उच्यते ॥ ८२ ॥ ८३ ॥

न प्रत्यग्ब्रह्मणोर्भेदं कदापि ब्रह्मसर्गयोः ॥ ८४ ॥
प्रज्ञया यो विजानाति स जीवन्मुक्त उच्यते ॥ ८५ ॥
साधुभिः पूज्यमानोपि पीड्यमानोपि दुर्जनैः ॥ ८६ ॥
सममेवभवेद्यस्य स जीवन्मुक्त उच्यते ॥ ८७ ॥
यथास्थितमिदं यस्य व्यवहारवतोपि च ॥ ८८ ॥
अस्तं गतं स्थितं व्योम स जीवन्मुक्त उच्यते ॥ ८९ ॥
नोदेति नास्तमायाति सुखदुःखे मनःप्रभा ॥ ९० ॥
यथा प्राप्तस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥ ९१ ॥
यो जागर्त्ति सुषुप्तिस्थो यस्य जाग्रन्नविद्यते ॥ ९२ ॥

---

जीवात्मपरमात्मनोर्भेदं ब्रह्मसर्गयोः आधाराधेयताकार्यकारणताभास्यभासकताभेदं कदापि प्रज्ञया यो न विजानाति स जीवन्मुक्त उच्यते ॥ ८४ ॥ ८५ ॥

साधुभिः सज्जनैःईश्वरबुद्ध्या पूज्यमानोऽपि दुर्जनैः भ्रान्तोयमिति पीड्यमनोपि यो भवति तथापि यस्य च तत्पूजापीडाकर्मणोःसममेव तुल्यमेव मनइतिशेषः भवेत् स जीवन्मुक्त उच्यते ॥ ८६ ॥ ८७ ॥

यस्य साधकस्य व्यवहारवतोपि इदं ब्रह्मतत्त्वं यथा स्थितं भवति स जीवन्मुक्त उच्यते यथास्थितम् अस्तंगतं वा घटशरावादि आकाशन्तु यथा स्थितं भवति तथेत्यर्थः ॥ ८८ ॥ ८९ ॥

यस्य मनःप्रभा प्रसन्नता सांसारिकसुखोदये नोदेति नाधिकविकासतामेति सांसारिकदुःखोदये नास्तं न वैवर्ण्यं प्राप्नोति स यथाप्राप्तस्थितिः सन् जीवन्मुक्त उच्यते ॥ ९० ॥ ९१ ॥

यः सुषुप्तिस्थोऽपि जागर्ति यस्य जाग्रत् जाग्रदुपलक्षितावस्थादि न विद्यते आत्मा ज्ञानस्वरूपः एकरसः सर्वदा तिष्ठति ज्ञानस्य कदापि कथमपि अभावानभ्युपगमात् "नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति श्रुतेः तदाशयेनाह य आत्मा सुषुप्तिस्थः सुषुप्त्यवस्थापन्नः जागर्त्ति प्रबुद्धो भवति स्वयंप्रकाशचैतन्यरूपेण विराजते यथा सुषुप्तौ इन्द्रियादीन्युपरमन्ते तथा ज्ञानरूपात्मा नोपरमते सुषुप्त्युत्थितस्य सौषुप्त

यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥ ९३ ॥
रागद्वेषभयादीनामनुरूपं चरन्नपि ॥ ९४ ॥
योऽन्तर्व्योमवदत्यच्छः सजीवन्मुक्त उच्यते ॥ ९५ ॥
यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते ॥ ९६ ॥
कुर्वतोऽकुर्वतो वापि स जीवन्मुक्त उच्यते ॥ ९७ ॥
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ॥ ९८ ॥
हर्षामर्षभयोन्मुक्तः स जीवन्मुक्त उच्यते ॥ ९९ ॥
यः समस्तार्थजालेषु व्यवहार्यपि शीतलः ॥ १०० ॥
परार्थेष्विव पूर्णात्मा स जीवन्मुक्त उच्यते ॥ १०१ ॥

---

सुखस्मरणात् तथा च श्रुतिः "सुखमहमस्वाप्सन्नैवकिञ्चिदवेदिषम्" इति यस्य जाग्रन्निति यद्यथास्वरूपस्थितस्यात्मनः जाग्रत् जाग्रदवस्था नविद्यते यथा जाग्रदवस्थायाम् इन्द्रियाणि स्वविषयेषु वर्त्तन्ते तथायमात्मा सर्वं जगदहमेवास्मीत्यनुसंधानात् कस्मिंश्चिद्विषये न वर्त्तते किन्तु निर्विषयः सन् स्वस्वरूपमात्रमुद्योतते यस्य बोधो निर्वासनः संस्काररहितो भवति स जीवन्मुक्त उच्यते ॥ ९२ ॥ ९३ ॥

ये बहिः रागादितत्तद्वृत्त्यनुरूपं चरन्नपि व्योमवदतिस्वच्छो नासक्तो भवति स जीवन्मुक्त उच्यते ॥ ९४ ॥ ९५ ॥

यस्य.कर्मकुर्वतोऽकुर्वतोपि वा देहादिसम्बन्धेनाहमिदं कर्म करोमीत्यहङ्कृतो भावो न विद्यते यस्य बुद्धिः पद्मपत्रस्थजलबिन्दुवत्कर्मणि तत्फले वा न लिप्यते स जीवन्मुक्त उच्यते ॥ ९६ ॥ ९७ ॥

यस्माद्योगिनः सकाशाल्लोको नोद्विजते यश्च योगी लोकान्नोद्विजते न ग्लानिविशेषं भजते यश्च स्वभावतो हर्षामर्षभयोन्मुक्तः स जीवन्मुक्त उच्यते ॥ ९८ ॥ ९९ ॥

यः ज्ञानी अज्ञवत् परार्थेष्विव आत्मातिरिक्तव्यग्न्द्रादिविषयेष्विव शरीरयात्रोपयोगिसमस्तार्थजालेषु अन्नाच्छादनादिरूपसर्वविषयसमूहेषु व्यवहारी अपि स्वात्मात्मीयाज्ञानाभावात् शीतलः न त्वज्ञवत् परिश्रान्तः अखण्डात्मकज्ञानेन परिपूर्णात्मा व्यापकरूपो भवति स जीवन्मुक्त उच्यते ॥ १०० ॥ १०१ ॥

प्रजहाति यदा कामान् सर्वान् चित्तगतान्मुने ॥ १०२ ॥
मयि सर्वात्मके तुष्टः सजीवन्मुक्त उच्यते ॥ १०३ ॥
चैत्यवर्जितचिन्मात्रे पदे परमपावने ॥ १०४ ॥
अक्षुब्धचित्तो विश्रान्तः स जीवन्मुक्त उच्यते ॥ १०५ ॥
इदं जगदयं सोऽहं दृश्यजातमवास्तवम् ॥ १०६ ॥
यस्य चित्ते न स्फुरति स जीवन्मुक्त उच्यते ॥ १०७ ॥
शान्तसंसारकलनः कलावानपि निष्कलः ॥ १०८ ॥
यः सचित्तोऽपि निश्चित्तः स जीवन्मुक्त उच्यते ॥ १०९ ॥
चिदात्माहं परात्माहं निर्गुणोहं परात्परः ॥ ११० ॥
आत्ममात्रेण यस्तिष्ठेत्स जीवन्मुक्त उच्यते ॥ १११ ॥

---

हे मुने यदा चित्तगतान् सर्वान् कामान् प्रजहाति मयि सर्वात्मके परमात्मनि तुष्टश्च भवति स जीवन्मुक्त उच्यते ॥ १०२ ॥ १०३ ॥

अक्षुब्धचित्तः निश्चलचित्तः सन् चैत्यवर्जितचिन्मात्रे निर्विषयशुद्धचैतन्ये परमपावने पदे स्थाने यः विश्रान्तः शान्तिं प्राप्तः स जीवन्मुक्त उच्यते ॥ १०४ ॥ १०५ ॥

इदं जगत् अयमन्यः सोहं देवदत्त इत्यादि अवास्तवं मिथ्याभूतं दृश्यजातं यस्य चित्ते न स्फुरति प्रकाशते सजीवन्मुक्त उच्यते ॥ १०६ ॥ १०७ ॥

शान्तसंसारकलनः निवृत्तसंसारज्ञानः कलावानपि प्रश्नोपनिषदुक्तप्राणादिकलावानपि निष्कलः कलाभिमानरहितः चित्तवानपि निश्चित्तः चित्ताभिमानशून्यो यो भवति स जीवन्मुक्त उच्यते ॥ १०८ ॥ १०९ ॥

व्यष्टिप्रपञ्चाधिकरणत्वेन भानाच्चिदात्माहम् समष्टिप्रपञ्चाधारत्वेन भानात्परात्माहम् गुणत्रयापवादाधारत्वेन भानान्निर्गुणः परस्माज्जीवादपि परत्वेन भानात् परात्परोऽहमित्यनेकविकल्परूपानात्मापह्नवसिद्धात्ममात्रेण यः सदा तिष्ठति स जीवन्मुक्त उच्यते ॥ ११० ॥ १११ ॥

देहत्रयातिरिक्तोऽहं शुद्धचैतन्यमस्म्यहम् ॥ ११२ ॥
ब्रह्माहमिति यस्यान्तः स जीवन्मुक्त उच्यते ॥ ११३ ॥
यस्य देहादिकं नास्ति यस्य ब्रह्मेति निश्चयः ॥ ११४ ॥
परमानन्दपूर्णो यः स जीवन्मुक्त उच्यते ॥ ११५ ॥
नित्यानन्दः प्रसन्नात्मा ह्यन्यचिन्ताविवर्जितः ॥ ११६ ॥
किञ्चिदस्तित्वहीनो यः स जीवन्मुक्त उच्यते ॥ ११७ ॥
अहं ब्रह्मास्म्यहं ब्रह्मास्म्यहं ब्रह्मेति निश्चयः ॥ ११८ ॥
चिदहं चिदहञ्चेति स जीवन्मुक्त उच्यते ॥ ११९ ॥
ओं तत्सदिति सार्द्धान्तिकजीवन्मुक्तिमहावाक्यानि महावाक्यरत्नावल्यामष्टमप्रकरणे एकोनविंशतिशतम् ॥

---

स्थूलसूक्ष्मकारणदेहत्रयभिन्नोऽहम् अहं शुद्धचैतन्यमस्मि यस्यान्तः हृदये ब्रह्माहमित्यखण्डाकारवृत्तिः स्फुरति स जीवन्मुक्त उच्यते ॥ ११२ ॥ ११३ ॥

यस्य देहादिकं नास्ति देहेन्द्रियाद्यभिमानो नास्ति यस्य प्रपञ्चो ब्रह्मेति निश्चयो भवति यश्च सदा परमानन्दपूर्णो भवति स जीवन्मुक्त उच्यते ॥ ११४ ॥ ११५ ॥

सदानन्दस्वरूपे निमग्नत्वान्नित्यानन्दः अत. प्रसन्नात्मा हीति निश्चयेन अन्यचिन्ताविवर्जित स्वव्यतिरेकेणान्यदस्तीतिचिन्ताशून्यः किञ्चिदस्तित्वहीनः प्रातिभासिक व्यावहारिकञ्च यत्सत्त्वं ताभ्यां हीनो यो भवति स जीवन्मुक्त उच्यते ॥ ११६ ॥ ॥ ११७ ॥

अहं ब्रह्मेति चिदहमिति च यस्य निश्चयः स जीवन्मुक्त उच्यते आवृत्तिरादरार्था ॥ ११८ ॥ ११९ ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायाम्महावाक्यरत्नावलिटीकायाम्प्रभाभिधानायाञ्जीवन्मुक्तिवाक्यविवरणं सम्पूर्णम् ॥ आहत्य वाक्यान्येकाधिकचतुश्शतम् ॥ ४०१ ॥

# अथ सार्द्धान्तिकस्वानुभूतिवाक्यानि ॥

योसावसौ पुरुषः सोहमस्मि ॥ १ ॥
तयोहं सोऽसौ योसौ सोहम् ॥ २ ॥
तं शान्तमचलमद्वयानन्दचिद्घन एवास्मि ॥ ३ ॥
तत्पूर्णानन्दैकबोधस्तद्ब्रह्मैवाहमस्मि ॥ ४ ॥
त्वं वाहमस्मि भगवो देवतेहं वै त्वमसि ॥ ५ ॥
सच्चिदानन्दात्मकोऽहमजोऽहं परिपूर्णोहमस्मि ॥ ६ ॥
शुद्धाद्वैत ब्रह्माहम् ॥ ७ ॥
वाचामगोचरनिराकारपरब्रह्मस्वरूपोहमेव ॥ ८ ॥

---

योसौ विश्वाधिष्ठानभूत ईश्वरः सोऽसौ क्षराक्षरविलक्षणः पुरुषः पुरुषोत्तमो भवति सोऽहं जीवोऽस्मि एतावता तत्त्वमस्यादिवाक्यलक्षितं जीवात्मपरमात्मनोरलक्षितम्भवति ॥ १ ॥

तस्य च देहे यः अहं जीवःसोसौ परमात्मा ईश्वरः यः असौ परमात्मा सोहम् एतावता अध्यात्माधिदैवयोरेकीभावरूपब्रह्मलक्षितम्भवति॥२॥

यस्तत्त्वमस्यादिवाक्यप्रतिपादितस्तं शान्तम् अचलं ज्ञात्वा अहमद्वयानन्दचिद्घन एवास्मि नान्य इत्यर्थः ॥ ३ ॥

यत्तत्पदलक्ष्यपरिपूर्णानन्दैकबोधरूपेणावशिष्यते तद्ब्रह्मैवाहमस्मि ब्रह्मातिरिक्तवस्त्वन्तराभावात् ॥ ४ ॥

हे भगवो हे भगवति सन्मात्ररूपिणि देवते त्वमेवाहमस्मि अहमेव त्वमसि प्रत्यक्परूपयोराश्रयोरन्तरं न विद्यते इत्यर्थः ॥ ५ ॥

सत् कालत्रयानपायि चित् ज्ञानम् आनन्दः सुखम् आत्मा स्वरूपं यस्य स तथोक्तः अहमस्मि स्वस्मादन्यन्न जायते अन्यस्मादपि स्वयं न जायते इत्यजोऽस्मि परिपूर्णोस्मि व्यापकतया परिपूर्णोस्मि ॥ ६ ॥

अशुद्धद्वैतापह्नवसिद्धशुद्धाद्वैतरूपेण बृंहणात् ब्रह्माहं न जीवोस्मीत्यर्थः ॥ ७ ॥

गुणरूढियोगादिवृत्तिनाऽनधिगम्यः निराकारः परब्रह्मस्वरूपोहमेव नान्यइत्यर्थः ॥ ८ ॥

सदोज्वलोऽविद्यातत्कार्यहीनः स्वात्मबन्धहरः सर्वदा द्वैतरहित आनन्दरूपः सर्वाधिष्ठानसन्मात्रो निरस्ताविद्यातमोमोहोहमेवाहमोम् तत्सद्यत् परं ब्रह्म रामचन्द्रश्चिदात्मकः सोहमोम् तद्रामभद्रः परं ज्योतीरसोहमोम् ॥ ९ ॥

तत्परः परमपुरुषः पुराणपुरुषोत्तमो नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दानन्ताद्वयपरिपूर्णः परमात्मा ब्रह्मैवाहं रामोऽस्मि ॥ १० ॥

त्रिषु धामसु यद्भोज्यं भोक्ता भोगश्च यद्भवेत् ॥ ११ ॥

तेभ्यो विलक्षणः साक्षी चिन्मात्रोहं सदा शिवः ॥ १२ ॥

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ॥ १३ ॥

---

सदोज्वलति सदा प्रकाशते इति सदोज्वलः अविद्या तत्कार्याण्यनन्तकोटिब्रह्माण्डानि तद्धीनः। स्वात्मबन्धं जीवत्वं तस्य हरः नाशकः सर्वदा कालत्रयेपि द्वैतरहितः आनन्दरूपः सर्वाधिष्ठानसन्मात्रः अखिलाधारसद्रूपोऽस्मि निरस्ताविद्यातमोमोहः यज्ज्ञानेन निरस्तः अविद्याकृताधिष्ठानगततमोमोहो यस्य स तथोक्तः अहमेव अहमोम् अहमोङ्कारार्थभूतं ब्रह्म तत्सन्मात्र यत्परंब्रह्मतत्स्वरूपत्वेन राजते स्वातिरिक्तप्रपञ्चद्रावकश्च भवतीति रामचन्द्रो यः रामचन्द्ररूपेण चिदात्मकः सोहमोम् ब्रह्म तद्ब्रह्म राजमान महस्तेजोरूपभद्रस्वरूपं यस्य सतथोक्तः परं ज्योतीरसः सर्वस्मात् परत्वेन ज्वलतीतिरसोहमोम् अहं ब्रह्मास्मीत्यर्थः ॥ ९ ॥

तत्परः ब्रह्मस्वरूपोस्मि परमपुरुषोहमस्मि पुराणपुरुषोत्तमोहमस्मि एवं रीत्यात्र नित्याद्यात्मानुभववाक्यमध्येऽप्यूह्यम् ॥ १० ॥

त्रिषु धामसु लोकत्रयेषु यद्भोज्यं भोक्ता भोगश्च यत् यः भवेत् तेभ्यो विकारेभ्यो विलक्षणः भिन्नः साक्षी चिन्मात्रोहं सदा कैवल्यरूपे शेतेऽस्मिन् जगदिति सदा शिवोऽस्मि ॥ ११ ॥ ॥ १२ ॥

जगत्कारणमायमापन्ने मय्येव सकलं जगज्जातं रज्जुसर्पवत् कल्पितमात्मस्वरूपाज्ञानात् मयि सर्वं प्रतिष्ठितमज्ञाति । मद्व्यतिरिक्त

मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥ १४ ॥
निर्वाणोस्मि निरीहोस्मि निरंशोस्मि निरीप्सितः ॥ १५ ॥
चिदात्मास्मि निरंशोस्मि परापरविवर्जितः ॥ १६ ॥
ब्रह्मैवाहं सर्ववेदान्तवेद्यं नाहं वेद्यं व्योमवातादिरूपम् ॥ १७ ॥
रूपं नाहं नाम नाहं न कर्म ब्रह्मैवाहं सच्चिदानन्दरूपम् ॥ १८ ॥
नित्यशुद्धो बुद्धमुक्तस्वभावः सत्यः सूक्ष्मः सन् विभुश्चाद्वितीयः १९
आनन्दाब्धिर्यत्परः सोहमस्मि प्रत्यग्धातुर्नात्र संशीतिरस्ति ॥ २० ॥
सोहमर्कः परं ज्योतिरर्कज्योतिरहं शिवः ॥ २१ ॥

---

न किञ्चिदस्तीति श्रुतिसिद्धसन्मात्रज्ञानाद्यस्मिन् मयि सर्वं वस्तु लयं याति तत् अद्वयं ब्रह्माहमस्मि ॥ १३ ॥ ॥ १४ ॥

नित्यमोक्षस्वरूपत्वान्निर्वाणरूपोस्मि मनोवृत्तिसामान्याभावान्निरीहोस्मि जगज्जीवेशादिविभागाभावान्निरंशोऽस्मि निरवयवोऽस्मि इच्छाविषयस्याभावान्निरीप्सितोस्मि अनात्माभावाच्चिदात्मरूपोस्मि अविभक्तचतुष्पत्त्वान्निरंशोऽस्मि परापरविवर्जितः शिवजीवादिनाम्ना परापरगणनाहीनोस्मि ॥ १५ ॥ ॥ १६ ॥

सर्ववेदान्तवेद्यईशाद्युपनिषद्वेद्यं ब्रह्मैवाहमस्मि व्योमवातादिरूपं वेद्यमहम्न भवामि । रूपं नाम कर्म च नाहं भवामि सच्चिदानन्दरूपं ब्रह्मैवाहमस्मि ॥ १७ ॥ १८ ॥

नित्यशुद्धः नित्यस्वरूपः बुद्धः बोधस्वरूपः मुक्तः मोक्षस्वरूपः स्वभावः स्वेनैव भवतीति स्वभावः सत्यः नित्यः सूक्ष्मः सूक्ष्मबुद्धिविषयः सत् सत्तारूपः विभुः व्यापकः अद्वितीयः द्वितीयरहितः आनन्दाब्धिः अपरिच्छिन्नानन्दरूपः यत् यः प्रत्यक्धातुः प्रतिपुरुषमश्नुतीतिप्रत्यक् स चासौ धातुः प्रपञ्चाधारश्चेति तथोक्तः प्रत्यगभिन्नपरमात्मा भवति सोहं परः परमात्मास्मीत्यत्र संशीतिः संशयो नास्ति ॥ १९ ॥ ॥ २० ॥

योऽर्कादिस्थूलप्रपञ्चावभासकपरं ज्योतीरूपश्चिदर्कः सोहम्

आत्मज्योतिरहं शुक्रः सर्वज्योतिरसावहोम् ॥ २२ ॥
द्वैतभावविमुक्तोस्मि सच्चिदानन्दलक्षणः ॥ २३ ॥
शुद्धबोधस्वरूपोहं केवलोहं सदा शिवः ॥ २४ ॥
निष्क्रियोस्म्यविकारोस्मि निर्गुणोस्मि निराकृतिः ॥ २५ ॥
निर्विकल्पोस्मि नित्योस्मि निरालम्बोस्मि निर्द्वयः ॥ २६ ॥
केवलाखण्डबोधोहं स्वानन्दोहं निरन्तरः ॥ २७ ॥
सत्यं ज्ञानमनन्तं यत् परं ब्रह्माहमेव तत् ॥ २८ ॥
केवलं चित् सदानन्दं ब्रह्मैवाहं जनार्दनः ॥ २९ ॥
शुभाशुभसङ्कल्पैः संशान्तोऽस्मि निरामयः ॥ ३० ॥
नष्टेष्टानिष्टकलनः संविन्मात्रपरोस्म्यहम् ॥ ३१ ॥

---

चिदर्कज्योतिः शिवश्चाहम् । शुक्रः स्वच्छः आत्मज्योतिरहम् असौ ओङ्कारार्थभूतयस्त्वन्तर्गतसर्वज्योतिरहम् ॥ २१ ॥ २२ ॥

अद्वैतरूपत्वात् द्वैतभावरहितोस्मि सच्चिदानन्दरूपः अतएव-शुद्धबोधस्वरूपोहम् कार्यकारणविनिर्मुक्तपूर्णबोधस्वरूपः केवलोहम् अशेषविशेषरहितः सदा शिवोहम् ॥ २३ ॥ २४ ॥

अहं निष्क्रियोस्मि क्रियारहितः अविकारोस्मि विकारसामान्याभाववान् निर्गुणोस्मि गुणत्रयरहितः निराकृतिः निरुपाधिः निर्विकल्पोस्मि विकल्पसामान्याभाववान् नित्योस्मि निरालम्बोस्मि आश्रयरहितः निर्द्वयः अद्वितीयोस्मि ॥ २५ ॥ २६ ॥

निर्विशेषाऽखण्डबोधोहम् स्वानन्दोहं स्वात्मनैवानन्दोहमित्यर्थः निरन्तरः व्यवधानरहितः यत् सत्यज्ञानानन्तरूपं तत्परब्रह्माहमेव ॥ २७ ॥ २८ ॥

निर्विशेष सच्चिदानन्दब्रह्मैवाहमस्मि भक्तानां जनं जन्म अर्दयति नाशयतीति जनार्दनोऽहम् । ब्रह्मैवाहम् प्रवृत्तिनिवृत्तिरूपशुभाशुभसङ्कल्पसमूहैः निवृत्तोऽस्मि स्थूलदेहे ममत्वाभावान्नीरोगोस्मि २९॥३०॥

, इष्टानिष्टज्ञानशून्यः संविन्मात्रपरोऽस्म्यहम् अहं केवलज्ञानरूपप-

अन्तर्याम्यहमग्राह्यो निर्देश्योऽहमलक्षणः ॥ ३२ ॥
अद्वैतोहमपूर्णोऽ हमबाह्योऽहमनन्तरः ॥ ३३ ॥
अद्वयानन्दविज्ञानघनोऽस्म्यहमविक्रियः ॥ ३४ ॥
अविद्याकार्यहीनोऽहमवाङ्मनसगोचरः ॥ ३५ ॥
आत्मचैतन्यरूपोऽहमहमानन्दचिद्घनः ॥ ३६ ॥
आप्तकामोऽहमाकाशात्परमात्मेश्वरोस्म्यहम् ॥ ३७ ॥
चिदानन्दोऽस्म्यहं चेता चिद्घनश्चिन्मयोऽस्म्यहम् ॥ ३८ ॥
ज्योतिर्मयोऽस्म्यहं ज्यायान् ज्योतिषां ज्योतिरस्म्यहम् ॥ ३९ ॥
नित्योऽहंनिरवद्योऽहंनिष्क्रियोऽस्मिनिरञ्जनः ॥ ४० ॥
निर्मलोनिर्विकल्पोऽहं निराख्यातोस्मि निश्चलः ॥ ४१ ॥
निर्विकारो नित्यपूतो निर्गुणो निस्पृहोऽस्म्यहम् ॥ ४२ ॥

---

रमेश्वरोऽस्मि अन्तर्नियामकोऽहम् अग्राह्यः इन्द्रियग्राह्यत्वरहितः अनिर्देश्योहम् निर्देष्टुमशक्यः अलक्षणः लक्षणागम्योऽऽहमस्मि ॥३१॥३२॥

स्वस्वरूपज्ञानदृष्ट्या अद्वैतोऽहम् जीवरूपेणपूर्णोऽहम् बाह्यान्तः-सम्बन्धाभावात् आबाह्यः अनन्तरः द्वैताभावादद्वयानन्दविज्ञानघनोऽस्मि अविक्रियोऽहम् विकाररहितोऽहम् ॥ ३३ ॥ ३४ ॥

अविद्यातत्कार्यशून्योहम् वाङ्मानन्यापारातिविषयः परमात्मचैतन्यरूपोऽहम् अत एवानन्दचिद्घनः ॥ प्राप्तसमस्तकामः आकाशादधिकपरिमाणत्त्वेन परमात्मेश्वरोऽस्म्यहम् ॥ ३५ ॥ ३६ ॥ ३७ ॥.

अहं चिदानन्दोऽस्मि चेताचैतन्यरूपोऽहम् चिद्घनश्चिन्मयोऽस्म्यहम्। ज्योतिर्मयः प्रकाशस्वरूपः अविद्यातोऽपि ज्यायान् ज्येष्ठः सूर्यादिज्योतिषामप्यवभासकज्योतिः स्वरूपोऽहमस्मि ॥ ३८ ॥ ३९ ॥

नित्यो हं निरवद्योहं निर्दोषोहम् निष्क्रियोऽस्मि निर्व्यापारोऽस्मि निरञ्जनः निर्म्मायः निर्मलः स्वच्छः निर्विकल्पः विकल्परहितः निराख्यातः अकथितस्वरूपः निश्चलः अचलोऽस्मि ॥ ४० ॥ ४१ ॥

अहं विकाररहित नित्यपूतः नित्यशुद्धः निर्गुणः निस्पृहः गुण-

निरिन्द्रियो नियन्ताहं निरपेक्षोऽस्मि निष्कलः ॥ ४३ ॥
पुरुषः परमात्माहं पुराणः परमोऽस्म्यहम् ॥ ४४ ॥
पूर्णानन्दैकबोधोऽहं प्रत्यगेकरसोऽस्म्यहम् ॥ ४५ ॥
प्रज्ञातोहं प्रशान्तोऽहं प्रकाशः परमेश्वरः ॥ ४६ ॥
एकधा चिन्त्यमानोऽहं द्वैताद्वैतविलक्षणः ॥ ४७ ॥
शुद्धोऽस्मि शुक्लः शान्तोऽस्मि शाश्वतोऽस्मि शिवोऽस्म्यहम् ॥४८॥
अहं सकृद्विभातोऽस्मि स्वे महिम्नि सदा स्थितः ॥ ४६ ॥
सच्चिदानन्दमात्रोऽहं स्वप्रकाशोऽस्मि चिद्घनः ॥ ५० ॥
मानावमानहीनोऽस्मि निर्गुणोऽस्मि शिवोऽस्म्यहम् ॥ ५१ ॥
द्वैताद्वैतविहीनोऽस्मि द्वन्द्वहीनोऽस्मि सोऽस्म्यहम् ॥ ५२ ॥

---

स्पृहाभ्यां शून्योऽस्मि । निरिन्द्रियः अकरणः नियन्ता अन्तःप्रेरकः निरपेक्षः निष्कलः कलारहितोऽस्मि ॥ ४२ ॥ ४३ ॥

पुरुषः परमात्माहम् परमात्मापुरुषोऽहम् पुराणः चिरन्तनः परमोऽस्म्यहम् सर्वोत्कृष्टोऽस्म्यहम् पूर्णानन्दैकबोधोऽहम् पूर्णानन्दतयैकोऽस्मीति बोधरूपोऽहम् प्रत्यगेकरसोऽस्म्यहम् प्रत्यग्रूपत्वेऽपि एकरसोऽस्मि एकरूपोऽस्मि ॥ ४४ ॥ ४५ ॥

स्वस्वरूपत्वेन प्रज्ञातोऽहम् प्रशान्तोऽहम् प्रकृष्टशान्तिमुपगतोऽहम् प्रकाशस्वरूपोऽहम् परमेश्वरः सर्वेश्वरः ॥ प्रज्ञाविज्ञामेकप्रकारकचिन्ताविषयोऽहम् द्वैताद्वैतविलक्षणः द्वैताद्वैतयोः सविशेषत्वेन तद्विलक्षणः निर्विशेषोऽहमित्यर्थः ॥ ४६ ॥ ४७ ॥

निर्विकारत्वाच्छुद्धोऽस्मि शुक्लः स्वच्छोऽस्मि शान्तोऽस्मि निगृहीतान्तरिन्द्रियोऽस्मि शाश्वतोऽस्मि सर्वदावर्त्तमानोऽस्मि अहं शिवोऽस्मि परमकल्याणकैवल्यरूपोऽस्मि सकृत् साक्षात्कृतोऽस्मि सदा स्वेमहिम्नि स्वस्मिन् रूपे स्थितोऽस्मि ॥ ४८ ॥ ४६ ॥

केवलसच्चिदानन्दस्वरूपोऽहं स्वप्रकाशस्वरूपोऽहं चिद्घनः ज्ञानघनोऽस्मि ॥ देहाभिमानाभावान्मानावमानहीनोऽस्मि गुणराहित्यान्निर्गुणोऽस्मि शिवोऽस्मि ॥ यो द्वैताद्वैतविहीनः द्वन्द्वहीनः सोऽहमस्मि ॥ ५० ॥ ५१ ॥ ५२ ॥

भावाभावविहीनोऽस्मि भासाहीनोऽस्मि भास्म्यहम् ॥ ५३ ॥
शून्याशून्यविहीनोऽस्मि शोभनाशोभनोऽस्म्यहम् ॥ ५४ ॥
सदसद्भेदहीनोऽस्मि सङ्कल्परहितोऽस्म्यहम् ॥ ५५ ॥
नानात्मभेदहीनोऽस्मि ह्यखण्डानन्दविग्रहः ॥ ५६ ॥
बन्धमोक्षविहीनोऽस्मि शुद्धब्रह्मास्मि सोऽस्म्यहम् ॥ ५७ ॥
चित्तादिसर्वहीनोऽस्मि परमोऽस्मि परात्परः ॥ ५८ ॥
सदा विचाररूपोऽस्मि निर्विचारोऽस्मि सोऽस्म्यहम् ॥ ५९ ॥
ध्यातृध्यानविहीनोऽस्मि ध्येयहीनोऽस्मि सोऽस्म्यहम् ॥ ६० ॥
लक्ष्यालक्ष्यविहीनोऽस्मि लयहीनरसोऽस्म्यहम् ॥ ६१ ॥
मातृमानविहीनोऽस्मि मेयहीनः शिवोऽस्म्यहम् ॥ ६२ ॥

---

स्वातिरिक्तमस्तिनास्तीति प्रतीत्यभावाद्भावाभावविहीनोऽस्मि भासाहीनोऽस्मि लक्षणरहितोऽस्मि भा प्रकाशोस्म्यहम् अवस्थात्रयाभावात् शून्याशून्यविहीनोऽस्मि "शून्यं सुषुप्तिराज्ञातमशून्यं जाग्रदादिकम्" इति चन्द्रिकोक्तेः । निवृत्तिप्रवृत्त्यभावात् शोभनाशोभनोऽस्म्यहम् ॥ ५३ ॥ ५४ ॥

स्थूलसूक्ष्मप्रपञ्चज्ञानाभावात् सदसद्भेदहीनोऽस्मि अमनस्करूपत्वात्सङ्कल्परहितोऽस्म्यहम् ॥ एकात्मावशेषत्वान्नानात्मभेदहीनोऽस्मि अपरिच्छिन्नानन्दशरीरत्वात् अखण्डानन्दविग्रहोऽस्मि ॥ नित्यमोक्षस्वरूपत्वात् सापेक्षबन्धमोक्षतत्साधनविहीनोऽस्मि शुद्धं ब्रह्मास्मीति यो मन्यते ब्रह्मवित्सोप्यहमस्मि ॥ ५५ ॥ ५६ ॥ ५७ ॥

चित्ततत्कल्पितप्रपञ्चाभावात् चित्तादिसर्वहीनोऽस्मि सर्वोत्कृष्टत्वात्परमोऽस्मि क्षराऽक्षरातीतपरात्परत्वात्परोऽस्मि ॥ सदा वेदान्तविचारप्रादुर्भावाद्विचारगम्योऽस्मि वस्तुतो योऽहं निर्विचारोऽस्मि सोऽस्म्यहम् ॥ ५८ ॥ ५९ ॥

मनोऽगम्यत्वात् ध्यात्रादित्रिपुटीहीनोऽस्मि सोहमस्मि । अद्वयत्वाल्लक्ष्याऽलक्ष्यविहीनोऽस्मि स्वातिरिक्तं पुरास्ति इदानीं लीयते इति भ्रमाभावाल्लयहीनरसोऽस्म्यहम् निराकारत्वात् मात्रादित्रिपुटीहीनोऽस्मि शिवोऽस्म्यहम् ॥ ६० ॥ ॥ ६१ ॥ ॥ ६२ ॥

सर्वेन्द्रियविहीनोऽस्मि सर्वकर्मकृदप्यहम् ॥ ६३ ॥
मुदितामुदिताख्योऽस्मि सर्वमौनफलोऽस्म्यहम् ॥ ६४ ॥
षड्विकारविहीनोऽस्मि षट्कोशरहितोऽस्म्यहम् ॥ ६५ ॥
देशकालविमुक्तोऽस्मि दिगम्बरसुखोऽस्म्यहम् ॥ ६६ ॥
अखण्डाऽऽकाशरूपोऽस्मि ह्यखण्डाऽऽकारमस्म्यहम् ॥ ६७ ॥
प्रपञ्चमुक्तचित्तोऽस्मि प्रपञ्चरहितोऽस्म्यहम् ॥ ६८ ॥
सर्वप्रकाशरूपोऽस्मि चिन्मात्रज्योतिरस्म्यहम् ॥ ६९ ॥
कालत्रयविमुक्तोऽस्मि कामादिरहितोऽस्म्यहम् ॥ ७० ॥
मुक्तिहीनोऽस्मि मुक्तोऽस्मि मोक्षहीनोऽस्म्यहं सदा ॥ ७१ ॥

---

वाक्श्रोत्रादिसर्वेन्द्रियविहीनोऽपि तत्तत्प्रापयात्मना सर्वकर्मकृद्प्यहम् "अपाणिपादो जवनो गृहीतेति श्रुतेः ॥ स्वस्वरूपज्ञानस्वस्वरूपाज्ञानाभ्यां मुदितामुदितोऽयमित्याख्या यस्य सोऽहमस्मि सर्वेषामिन्द्रियाणां मौनं स्वस्वविषयाग्रहणं तज्जन्यं यत्फलं ब्रह्म तदेवाहमस्मि पुंस्त्वमार्षम् ॥ ६३ ॥ ६४ ॥

जायतेऽस्ति वर्द्धते विपरिणमतेऽपक्षीयते विनश्यतीति षड्भावविकारवद्देहविलक्षणत्वात् षड्विकारविहीनोऽस्मि त्वङ्मांसरुधिरस्नायुमज्जास्थिरूपषट्कोशरहितोऽस्म्यहम् । देशकालरूपपरिच्छेदाभावात् देशकालविमुक्तोऽस्मि दिगम्बरस्येव शिवस्येव सुखं यस्य सोऽस्म्यहम् ॥ ६५ ॥ ॥ ६६ ॥

खण्डाकाशभासचिदाकाशरूपत्वादखण्डाकाशरूपोऽस्मि अखण्डाकारवृत्तिगम्यत्वादखण्डाकारं ब्रह्माहमस्मि यतः प्रपञ्चनिर्मुक्तं परित्यक्तं चित्तं यस्य स तथाभूतोऽतः प्रपञ्चरहितोस्म्यहम् ॥६७॥६८॥

सूर्य्यादिसर्वप्रकाशरूपोऽस्मि चिन्मात्रज्योतिरस्मि चैतन्यरूपप्रकाशोऽहम् भूतादिकालत्रयमुक्तोऽस्मि सर्वानर्थहेतुकामसङ्कल्पादिवृत्तिरहितोऽस्म्यहम् ॥ ६९ ॥ ॥ ७० ॥

बन्धसापेक्षमुक्तिहीनोऽस्मि अज्ञानिविकल्पितबन्धमोक्षभ्रमतः सद

भावाभावविहीनोऽस्मि भाषाहीनोऽस्मि भास्म्यहम् ॥ ५३ ॥
शून्याशून्यविहीनोऽस्मि शोभनाशोभनोऽस्म्यहम् ॥ ५४ ॥
सदसद्भेदहीनोऽस्मि सङ्कल्परहितोऽस्म्यहम् ॥ ५५ ॥
नानात्मभेदहीनोऽस्मि ह्यखण्डानन्दविग्रहः ॥ ५६ ॥
बन्धमोक्षविहीनोऽस्मि शुद्धब्रह्मास्मि सोऽस्म्यहम् ॥ ५७ ॥
चित्तादिसर्वहीनोऽस्मि परमोऽस्मि परात्परः ॥ ५८ ॥
सदा विचाररूपोऽस्मि निर्विचारोऽस्मि सोऽस्म्यहम् ॥ ५९ ॥
ध्यातृध्यानविहीनोऽस्मि ध्येयहीनोऽस्मि सोऽस्म्यहम् ॥ ६० ॥
लक्ष्यालक्ष्यविहीनोऽस्मि लयहीनरसोऽस्म्यहम् ॥ ६१ ॥
मातृमानविहीनोऽस्मि मेयहीनः शिवोऽस्म्यहम् ॥ ६२ ॥

---

स्वातिरिक्तमस्तिनास्तीति प्रतीत्यभावाद्भावाभावविहीनोऽस्मि भाषाहीनोऽस्मि लक्षणरहितोऽस्मि भा प्रकाशोऽस्म्यहम् अवस्थात्रयाभावात् शून्याशून्यविहीनोऽस्मि "शून्यं सुषुप्तिरात्मातमशून्यं जाग्रदादिकम्" इति चन्द्रिकोक्तेः । निवृत्तिप्रवृत्त्यभावात् शोभनाशोभनोऽस्म्यहम् ॥ ५३ ॥ ५४ ॥

स्थूलसूक्ष्मप्रपञ्चज्ञानाभावात् सदसद्भेदहीनोऽस्मि अमनस्करूपत्वात्सङ्कल्परहितोऽस्म्यहम् ॥ एकात्मावशेषत्वान्नानात्मभेदहीनोऽस्मि अपरिच्छिन्नानन्दशरीरत्वात् अखण्डानन्दविग्रहोऽस्मि ॥ नित्यमोक्षस्वरूपत्वात् सापेक्षबन्धमोक्षतत्साधनविहीनोऽस्मि शुद्धं ब्रह्मास्मीति यो मन्यते ब्रह्मवित्सोऽप्यहमस्मि ॥ ५५ ॥ ५६ ॥ ५७ ॥

चित्ततत्कल्पितप्रपञ्चाभावात् चित्तादिसर्वहीनोऽस्मि सर्वोत्कृष्टत्वात्परमोऽस्मि क्षराऽक्षरातीतपरात्परत्वात्परोऽस्मि ॥ सदा वेदान्तविचारप्रादुर्भावाद्विचारगम्योऽस्मि वस्तुतो योऽहं निर्विचारोऽस्मि सोऽस्म्यहम् ॥ ५८ ॥ ५९ ॥

मनोऽगम्यत्वात् ध्यात्रादित्रिपुटीहीनोऽस्मि सोहमस्मि । अद्वयत्वाल्लक्ष्याऽलक्ष्यविहीनोऽस्मि स्वातिरिक्तं पुरास्ति इदानीं लीयते इति भ्रमाभावाल्लयहीनरसोऽस्म्यहम् निराकारत्वात् मात्रादित्रिपुटीहीनोऽस्मि शिवोऽस्म्यहम् ॥ ६० ॥ ॥ ६१ ॥ ॥ ६२ ॥

निर्विकल्पस्वरूपोऽस्मि निरीहोऽस्मि निरामयः ॥ ८३ ॥
अपरिच्छिन्नरूपोऽस्मि ह्यनन्तानन्दरूपवान् ॥ ८४ ॥
आत्मारामस्वरूपोऽस्मि ह्यहमात्मा सदाशिवः ॥ ८५ ॥
आदिमध्यान्तशून्योऽस्मि ह्याकाशसदृशोऽस्म्यहम् ॥ ८६ ॥
नित्यशुद्धचिदानन्दः सत्तामात्रोऽहमव्ययः ॥ ८७ ॥
नित्यशुद्धविशुद्धैकसच्चिदानन्दमस्म्यहम् ॥ ८८ ॥
भूमानन्दस्वरूपोऽस्मि भाषाहीनोऽस्म्यहं सदा ॥ ८९ ॥
सर्वाधिष्ठानरूपोऽस्मि सर्वदाचिद्घनोऽस्म्यहम् ॥ ९० ॥
चित्तवृत्तिविहीनोऽहं चिदात्मैकरसोऽस्म्यहम् ॥ ९१ ॥
अहं ब्रह्मैव सर्वं स्यादहं चैतन्यमेवहि ॥ ९२ ॥
अहमेवाहमेवास्मि भूमाकारस्वरूपवान् ॥ ९३ ॥
अहमेवमहानात्मा ह्यहमेवपरात्परः ॥ ९४ ॥

---

निर्विकल्पस्वरूपोऽस्मि असंशयितरूपोस्मि निरीहः निश्चेष्टोऽस्मि निरामयः निरुपद्रवः ॥ अपरिमितोऽस्मि आनन्दमधुरवान् ॥ आत्मारामस्वरूप. अहं सदा शिवः आत्मा परमात्मा ॥ आदिमध्यान्तशून्योऽस्मि अत एवाकाशसदृशोऽस्म्यहम् ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥

अहं निर्विशेषनित्यशुद्धचिदानन्दसत्तामात्रोऽस्मि अव्ययः निर्विकारोऽस्मि ॥ नित्यशुद्धविशुद्धैकसच्चिदानन्दं ब्रह्माहमस्मि ॥ भूमानन्दस्वरूपः व्यापकानन्दस्वरूपः अहं सदा लक्षणरहितोऽस्मि अधिष्ठेयप्रपञ्चसत्वे तत्सर्वाधिष्ठानरूपोऽस्मि वस्तुतो निरधिष्ठातया च चिद्घनोऽहं चिन्मात्रमहमस्मीत्यर्थ. ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥

अचित्तत्वाच्चित्तवृत्तिविहीनोऽहं ज्ञानरूपः एकरसः अपरिणामी सोऽहमस्मि ॥ सर्वं दृश्यादि स्याच्चेत् ब्रह्मैव तदेवाहम् पुनः चैतन्यमहमेव ॥ व्यापकस्वरूपः सर्वश्चाहमेवास्मि नान्यः ॥ अहमेव महान् महत्परिमाणः आत्मा पुनः अहमेव परात्परो ब्रह्मरूपोऽस्मि ॥ ९१ ॥ ॥ ९२ ॥ ॥ ९३ ॥ ९४ ॥

गन्तव्यदेशहीनोऽस्मि गमनादिविवर्जितः ॥ ७२ ॥
सर्वदा समरूपोऽस्मि शान्तोऽस्मि पुरुषोत्तमः ॥ ७३ ॥
चिदक्षरोऽहं सत्योऽहं वासुदेवोऽजरामरः ॥ ७४ ॥
अहमेवाक्षरं ब्रह्म वासुदेवाख्यमद्वयम् ॥ ७५ ॥
परब्रह्मस्वरूपोऽहं परमानन्दमस्म्यहम् ॥ ७६ ॥
केवलं ज्ञानरूपोऽहं केवलं परमोऽस्म्यहम् ॥ ७७ ॥
केवलं शान्तरूपोऽहं केवलं चिन्मयोऽस्म्यहम् ॥ ७८ ॥
केवलं नित्यरूपोऽहं केवलं शाश्वतोऽस्म्यहम् ॥ ७९ ॥
केवलं सत्यरूपोऽहमहन्त्यक्त्वाहमस्म्यहम् ॥ ८० ॥
केवलं तुर्यरूपोऽस्मि तुर्यातीतोऽस्मि केवलः ॥ ८१ ॥
केवलाकाररूपोऽस्मि शुद्धरूपोऽस्म्यहं सदा ॥ ८२ ॥

---

मुक्तोऽस्मि अविद्याभावात्तन्मोहहीनोऽस्मि स्वातिरेकेण गन्तव्यदेश-हीनोऽस्मि निरुपाधिकत्वाद् गमनादिवर्जितः ॥ ७१ ॥ ७२ ॥

अज्ञानविकल्पितविषमेषु सत्स्वपि सर्वदा समरूपोऽस्मि सर्वत्रयैष-म्यनिवृत्तेः शान्तोऽस्मि पुरि शेरते ये ते पुरुषा जीवादयस्तेषूत्तमः पुरुषो-त्तमोऽस्मि ॥ अविरक्षराभावात् चिदक्षरोऽहं वसन्त्यस्मिन् भूतानीति वासुः दीव्यते इति देवः वासुश्चासौ देवश्चेति वासुदेवोऽस्मि जरा-मरणयोरभावादजरः अमरोऽस्मि ॥ ७३ ॥ ७४ ॥

नक्षरतीत्यक्षरमद्वयं वासुदेवाख्यं ब्रह्माहमेव ॥ अहं परमानन्दमस्मि क्लिन्नमार्षम् । परब्रह्मस्वरूपोऽहमस्मि ॥ ७५ ॥ ७६ ॥

केवलं निर्विशेषज्ञानस्वरूपोऽहं समष्ट्युपाध्युपहितनिर्विशेषपर-मात्माहमस्मि ॥ केवलं शान्तस्वरूपोऽहम् केवलमहं ज्ञानप्रचुरोऽस्मि-केवलं नित्यस्वरूपोहम् केवलं शाश्वतः सर्वदा वर्तमानोऽस्म्यहम् सर्वत्र देहत्रयेषु अहमहं भावं त्यक्त्वा अहमहम् प्रतिशरीरावच्छि-न्नोऽहम् केवलं सत्यरूपो ब्रह्माहमसीत्यर्थः ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥

निर्विशेषतुरीयावस्थापन्नोऽस्मि सकलावस्थाविर्मुक्तः केवलः निर्विशेषब्रह्मरूपोऽस्मि ॥ निर्विशेषसच्चिदानन्दरूपोऽस्मि सदाहं शुद्ध-रूपः मायारहितोऽस्मि ॥ ८१ ॥ ८२ ॥

एकमेवाद्वितीयं सद्ब्रह्मैवाऽहं न संशयः ॥ १०७ ॥
अहमेव परं ब्रह्म ह्यहमेव गुरोर्गुरुः ॥ १०८ ॥
सर्वज्ञानप्रकाशोऽस्मि मुख्यविज्ञानविग्रहः ॥ १०९ ॥
तुर्यातुर्यप्रकाशोऽस्मि तुर्यातुर्यादिवर्जितः ॥ ११० ॥
दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम् ॥ १११ ॥
अलेपकं सर्वगतं यदद्वयं तदेव चाहं सकलं विमुक्त ओम् ॥११२॥
अहं ब्रह्मास्मि मन्त्रोऽयं जन्मपापं विनाशयेत् ॥ ११३ ॥
अहं ब्रह्मास्मि मन्त्रोयं भेदबुद्धिं विनाशयेत् ॥ ११४ ॥
अहं ब्रह्मास्मि मन्त्रोयं कोटिदोषं विनाशयेत् ॥ ११५ ॥
अहं ब्रह्मास्मि मन्त्रोऽयं ज्ञानानन्दं प्रयच्छति ॥ ११६ ॥

ऽहमस्मि ॥ सजातीयविजातीयस्वगतभेदरहितमेकमद्वैतं ब्रह्मैवाहमत्रसंशयो न ॥ अहमेव परं ब्रह्म गुरोर्गुरुः जगद्गुरूणां ब्रह्मादीनामपि स्वविज्ञानोपदेष्टृत्वात् गुरुरहम् ॥ व्यवहारिकयावज्ज्ञानप्रकाशकोऽस्मि मुख्यविज्ञानशरीरः स्वप्रस्याक्षदृष्टिभ्यां तुर्यमात्रादिरूपेण भानात् तुर्यातुर्यप्रकाशोऽस्मि परमार्थदृष्टिविभातनिर्विशेषब्रह्ममात्ररूपेण तुर्यातुर्यादिवर्जितोऽस्मि आदिशब्देनावस्थात्रयमपि गृह्यते ॥ १०६ ॥ ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥

दृशिस्वरूपं ज्ञानस्वरूपं निरवयवत्वात् गगनोपमं परं मायातत्कार्यात्परम् निरावरणत्वेन सदा विभानात् सकृद्विभातम् जन्माभावादजम् एकम् अक्षरम् ॥ मायातत्कार्यलेपाभावादलेपकम् सर्वव्यापकत्वात्सर्वगतम् यदद्वयं ब्रह्मावशिष्यते सकलं जगच्च अहञ्च तदेव ब्रह्मैव अतः सर्वथा विमुक्तोऽस्मि ओम् ओङ्कारार्थस्तुर्यातुर्योऽस्मि ॥१११॥११२॥

महाभयान्मन्तारं त्रायते इत्यहं ब्रह्मास्मीति मन्त्रः जन्मतद्धेतुपुण्यपापजातं जगज्जीवेशादिभेदबुद्धिं तत्कार्यकोटिदोषञ्च नाशयित्वा ज्ञानानन्दकैवल्यं प्रयच्छति यतोहं ब्रह्मास्मीति मन्त्रः कैवल्यप्रापकोऽतः सर्वमन्त्रान् सम्यग् उत्सृज्याज्ञानादासुप्तेश्चैतन्मन्त्रं सम-

अहमन्यवदाभामि ह्यहमेव शरीरवान् ॥ ९५ ॥
अहं शिष्यवदाभामि ह्यहंलोकत्रयाश्रयः ॥ ९६ ॥
अहं कालत्रयातीतो ह्यहं वेदैरुपासितः ॥ ९७ ॥
अहं शास्त्रेण निर्णीत अहं चित्ते व्यवस्थितः ॥ ९८ ॥
आनन्दघन एवाहमहं ब्रह्मास्मि केवलम् ॥ ९९ ॥
आत्मनात्मनि तृप्तोऽस्मि ह्यरूपोह्यहमव्ययः ॥ १०० ॥
आकाशादपि सूक्ष्मोऽहमाद्यन्ताभाववानहम् ॥ १०१ ॥
सत्तामात्रस्वरूपोऽहं शुद्धमोक्षस्वरूपवान् ॥ १०२ ॥
सत्यानन्दस्वरूपोऽहं ज्ञानानन्दघनोऽस्म्यहम् ॥ १०३ ॥
नामरूपविमुक्तोऽहमहमानन्दविग्रहः ॥ १०४ ॥
आदिचैतन्यमात्रोऽहमखण्डैकरसोऽस्म्यहम् ॥ १०५ ॥
सर्वत्र पूर्णरूपोऽहं परामृतरसोऽस्म्यहम् ॥ १०६ ॥

---

अज्ञदृष्ट्या अहमन्यवत् शरीरवत्गुरुशिष्यादिवच्चाभामि आभासमानोऽस्मि ॥ अज्ञदृष्ट्या अहं शिष्यवत् आभामि आभासमानोस्मि स्वरूपज्ञदृष्ट्या तु लोकत्रयाश्रयोऽहं ॥ अहं भूतादिकालत्रयातीतः चतुर्भिर्वेदैरुपासितोऽहम् ॥ अहं वेदान्तशास्त्रेण निश्चितः चित्तोपाधौ जीवरूपेण स्थितः॥ अहम् आनन्दघन एव अहं केवलं ब्रह्मास्मि॥ आत्मना अखण्डाकारवृत्तिमन्मनसा स्वात्मन्येव तृप्तोस्मि अरूपोऽत एवाव्ययोऽस्मि सद्रूपत्वात् ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥

शब्दगुणकाकाशादपि निर्गुणत्वेन सूक्ष्मोऽहम् उत्पत्तिप्रलयाभाववानहम् ॥ सत्तामात्रस्वरूपोऽहम् शुद्धमोक्षस्वरूपवान् ॥ सत्यस्वरूपोऽहम् आनन्दरूपोऽहम् ज्ञानघनोऽहम् आनन्दघनोऽस्म्यहम् ॥ नामरूपविमुक्तोऽहम् आनन्दशरीरोऽहम् ॥ सर्वकारणभूतम् आदि ब्रह्म चैतन्यमात्रोऽहम् ॥ अखण्डैकरसोऽहमस्मि ॥ १०१ ॥ १०२ ॥ ॥ १०३ ॥ १०४ ॥ १०५ ॥

सर्वत्र पूर्णरूपोऽहम् परामृतरसोऽहमस्मि परममोक्षस्वरूपो-

# अथ सार्द्धान्तिकसमाधिवाक्यानि ।

जीवात्मपरमात्मैक्यावस्थात्रिपुटिरहिता परमानन्दस्वरूपा शुद्धचैतन्यात्मिका समाधिः ॥ १ ॥

ध्यातृध्याने विहाय निवातस्थितदीपवत् ध्येयैकगोचरं चित्तं समाधिः ॥ २ ॥

मनः प्रचारशून्यं परमात्मनि लीनं भवति ॥ ३ ॥

प्राप्ते ज्ञानेन विज्ञाने ज्ञेये परमात्मनि हृदि संस्थिते देहे लब्धशान्तिपदं गते तदा प्रभा मनोबुद्धिशून्यं भवति ॥ ४ ॥

प्राणापानयोरैक्यं कृत्वा धृतकुम्भको नासाग्रदर्शनदृढभाव-

---

स्वानुभूतिविशिष्टजीवन्मुक्तानां सम्प्रज्ञातासम्प्रज्ञातसमाध्यर्थं सार्द्धान्तिकसमाधिवाक्यान्युच्यन्ते जीवात्मेत्यादिना ॥

जीवात्मपरमात्मनोरैक्यावस्थाभेदशून्यत्वेनैकावस्थात्वं त्रिपुटिरहिता ध्यातृध्यानध्येय इति त्रिपुटिरहिता परमानन्दस्वरूपा शुद्धचैतन्यात्मिका निर्विकल्पकधीवृत्त्यारूढा चित् निर्विकल्पसमाधिरुच्यते ॥ १ ॥

ध्यातृध्यानसम्बन्धं विहाय निवातस्थितदीपवत् ध्येयब्रह्मैकगोचराखण्डाकारचित्तवृत्तिः समाधिः ॥ २ ॥

कामादिवृत्तिशून्यं मनः परमात्मभावमेति ॥ ३ ॥

शास्त्रजन्यज्ञानेन स्वानुभूतिजन्यविज्ञाने प्राप्ते सति स्वहृदि ज्ञेये परमात्मनि संस्थिते देहे देहत्रयाभिमाने लब्धशान्तिपदं गते शान्ते सति तदा तदानीमेव प्रभा मनोबुद्धिकल्पितजाग्रदाद्यवस्थात्रयं शून्यं भवति यत्र श्रोत्रादिभिः शब्दादिविषयजातं स्फुटं गृह्यते सोऽहङ्कृतपूर्णविकासः प्रभा जाग्रदवस्थेत्युच्यते अहङ्कृतिविकासार्थो यत्र मीयते तन्मनस्तत्कार्यं स्वप्न उच्यते यत्राहङ्कृतिस्तनुभावमेत्य बुध्यते सा बुद्धिस्तत्कार्यं सुषुप्तिरुच्यते । जाग्रदवस्थात्रयशान्तिरेव निर्विकल्पसमाधिरित्यर्थः ॥ ४ ॥

द्विकराङ्गुलिभिः षण्मुखीकरणेन नासाग्रदर्शनदृढभावनया च

सर्वमन्त्रान्समुत्सृज्य एतन्मन्त्रं समभ्यसेत् ॥ ११७ ॥
सद्योमोक्षमवाप्नोति नास्ति सन्देहमण्वपि ॥ ११८ ॥

ॐतत्सदिति सार्द्धान्तिकस्वानुभूतिमहावाक्यानि महावाक्यरत्नावल्यां नवमप्रकरणेऽष्टादशोत्तरशतम् ।

---

भ्यसेत् एवं सदाहं ब्रह्मास्मीत्यनुसन्धानात्सद्योमोक्षं विदेहकैवल्यं यातीत्यत्राण्वपि सन्देहो नास्तीत्यर्थः ॥ ११३ ॥ ११४ ॥ ११५ ॥ ॥ ११६ ॥ ११७ ॥ ११८ ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायाम्महावाक्यरत्नावलिटीकायाम्प्रभाभिधानायां स्वानुभूतिवाक्यविवरणं सम्पूर्णम् ॥ आहत्यवाक्यान्येकोनविंशत्युत्तरपञ्चशतम् ॥ ५१९ ॥



सरूपो सौ मनोनाशो जीवन्मुक्तस्य विद्यते ॥ १३ ॥
निद्राद्यारूपनाशस्तु वर्त्तते देहमुक्तिके ॥ १४ ॥
चित्ते चैत्यदशाहीने या स्थितिः क्षीणचेतसाम् ॥ १५ ॥
सोच्यते शान्तकलना जाग्रत्येव सुषुप्तता ॥ १६ ॥
नैतज्जाग्रन्न च स्वप्नः सङ्कल्पानामभावनात् ॥ १७ ॥
सुषुप्तभावो नाप्येतदभावाज्जडतास्थितेः ॥ १८ ॥
सत्त्वावबोध एवासौ वासनातृणपावकः ॥ १९ ॥
प्रोक्तः समाधिशब्देन न तु तूष्णीमवस्थितिः ॥ २० ॥
निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ॥ २१ ॥

---

जीवन्मुक्तस्य मुनेः असौ समाधिजः मनोनाशः सरूपः विद्यते उत्थानदशायां मनसः प्रादुर्भावात् तु पुनः मनसः निद्राद्यारूपनाशः निद्रा योगनिद्रा आद्या यस्य असौ निद्राद्यः अरूपनाशः अरूपश्चासौ नाश इति अरूपनाशः निद्राद्यः स चासौ अरूपनाशः निद्राद्यारूपनाशः। देहमुक्तिके विदेहमुक्तौ वर्त्तते पुनः व्युत्थानाभावात् ॥१३॥१४॥

क्षीणचेतसां योगिनां चित्तेऽन्तःकरणे चैत्यदशाहीने सङ्कल्पाद्यवस्थाहीने सति निर्विकल्परूपिणी या स्थितिरवशिष्यते ॥ सेयं जाग्रत्येव विषयाग्रहणरूपसुषुप्तता शान्तकलना निर्विकल्पकसमाधिरुच्यते ॥ १५ ॥ १६ ॥

एतन्निर्विकल्पावस्थारूपं जाग्रन्नभवति वाङ्मनआदिचतुर्दशकरणव्यावृत्त्यभावात् न च स्वप्नरूपं स्यान्तःकरणचतुष्टयगोचरसङ्कल्पादिवृत्तीनाममभावात् ॥ एतत्सुषुप्तभावोऽपि न भवति सुषुप्तिवज्जडतास्थितेरभावात् ॥ १७ ॥ १८ ॥

असौ ब्रह्मैवेति निश्चयबुद्धिः वासनातृणपावकः वासनातृणभस्मसदुपायको भवति ॥ स एव समाधिशब्देन प्रोक्तः न तु तूष्णीमवस्थितिः ॥ १९ ॥ २० ॥

जाग्रदाद्यवस्थासु निर्विकारतया पुनर्ब्रह्माकारतया च वृत्त्या युक्-

नया द्विकराङ्गुलीभिः षण्मुखीकरणेन प्रणवध्वनिं निशम्य मनस्तत्र लीनं भवति ॥ ५ ॥
पयः स्रवानन्तरं धेनुस्तनक्षीरमिव सर्वेन्द्रियवर्गे परिनष्टे मनोनाशं भवति ॥ ६ ॥
यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ॥ ७ ॥
बुद्धिश्च न विचेष्टन्ती तामाहुः परमाङ्गतिम् ॥ ८ ॥
संशान्तसर्वसङ्कल्पा या शिलावदवस्थितिः ॥ ९ ॥
जाग्रन्निद्राविनिर्मुक्ता सा स्वरूपस्थितिः परा ॥ १० ॥
मारुतेमध्यसञ्चारे मनःस्थैर्यं प्रजायते ॥ ११ ॥
यो मनः सुस्थिरीभावः सैवावस्था मनोन्मनी ॥ १२ ॥

---

धृतकुम्भकः ऊर्ध्वाधोवृत्तिमत्प्राणापानयोरैक्यं कृत्वा दीर्घघण्टानिनादवदनाहताख्ये हृदये प्रणवध्वनिं निशम्य च मनस्तदवलम्बनं विलीयते तल्लयावस्था समाधिरित्यर्थः एतत्षण्मुखीविधिः गुरुमुखादवगन्तव्यः ॥ ५ ॥

गोपालवत्सयोगतो धेनुस्तनगतपयःस्रावानन्तरं धेनुस्तनक्षीरमिव सर्वेन्द्रियव्यापारे नष्टे मनो नश्यति सेयममनस्कावस्थैव समाधिरित्यर्थः ॥ ६ ॥

यस्यामवस्थायां पञ्चज्ञानानि पञ्चज्ञानेन्द्रियाणि मनसा सह यदावतिष्ठन्ते स्वस्वव्यापारं न कुर्वते च पुनः बुद्धिर्न विचेष्टन्ती न व्यापारं कुर्वती तां परमाङ्गतिं समाधिमाहुः ॥ ७ ॥ ८ ॥

निवृत्तसङ्कल्पादिवृत्तिः या शिलावदवस्थितिः पाषाणवदचलावस्था ॥ जाग्रदाद्यवस्थात्रयविनिर्मुक्ता सा परा स्वरूपस्थितिः समाधिरित्यर्थः ॥ ९ ॥ १० ॥

प्राणायामद्वारा मारुते सुषुम्नानाडीमध्ये सञ्चरति सहस्रारपर्यन्तं व्याप्नुवति सति तत्रत्यचिदाकाशे मनःस्थैर्यं प्रजायते ॥ यो मनःसुस्थिरीभावः सैवावस्था मनोन्मनी निर्विकल्पश्च समाधिर्भवतीतिभावः ॥ ११ ॥ १२ ॥

निश्चिता विगताभीष्टा हेयोपादेयवर्जिता ॥ ३३ ॥
ब्रह्मन् समाधिशब्देन परिपूर्णमनोगतिः ॥ ३४ ॥
सलिले सैन्धवं यद्वत् साम्यं भजति योगतः ॥ ३५ ॥
तथात्ममनसोरैक्यं समाधिरभिधीयते ॥ ३६ ॥
यत्समत्वं तयोरत्र जीवात्मपरमात्मनोः ॥ ३७ ॥
समस्तनष्टसङ्कल्पः समाधिरभिधीयते ॥ ३८ ॥
प्रभाशून्यं मनःशून्यं बुद्धिशून्यं निरामयम् ॥ ३९ ॥
सर्वशून्यं निराभासं समाधिरभिधीयते ॥ ४० ॥
ब्रह्माकारमनोवृत्तिप्रवाहोऽहङ्कृतिं विना ॥ ४१ ॥
संप्रज्ञातसमाधिः स्यात् ध्यानाभ्यासप्रकर्षतः ॥ ४२ ॥
प्रशान्तवृत्तिकं चित्तं परमानन्ददीपकम् ॥ ४३ ॥

---

हे ब्रह्मन् ब्रह्मैवाहमस्मीति निश्चिता अपगतेच्छाविषया अज्ञानं हेयं ज्ञानमुपादेयं तदुभयवर्जिता इत्थं विशेषणविशिष्टा परिपूर्णब्रह्मगोचरा मनोगतिः समाधिशब्देनोच्यते ॥ ३३ ॥ ३४ ॥

यथा सलिले सैन्धवं योगतः सलिलसम्बन्धात्सलिलसाम्यं सलिलत्वं भजति तथात्ममनसोरैक्यं समाधिः मनस आत्मसम्बन्धादात्मरूपत्वमेव समाधिरभिधीयते ॥ ३५ ॥ ३६ ॥

अत्र संसारे जीवात्मपरमात्मनोः यत्समत्वमैक्यमवशिष्यते ॥ तद्रूपोऽयं नष्टसमस्तसङ्कल्पः समाधिरभिधीयते ॥ ३७ ॥ ३८ ॥

पूर्वोक्तार्थप्रभामनोबुद्धिविकल्पितजाग्रत्स्वप्नसुषुप्तितत्कार्यं सर्वं शून्यमिति ज्ञात्वा तच्छून्यापवादास्पदमनामयं विक्षेपरहितं यथास्यात्तथा निराभासम् आभासान्निर्गतं ब्रह्मास्मीति ज्ञानमेव समाधिरित्यभिधीयते ॥ ३९ ॥ ४० ॥

देहादावहंभावं विना ध्यानाभ्यासाधिक्यात् सञ्जातः ब्रह्माकारमनोवृत्तिप्रवाहः संप्रज्ञातसमाधिः स्यात् ॥ ४१ ॥ ४२ ॥

प्रशान्तवृत्तिकं निरस्तसकलवृत्तिकम् परमानन्ददीपकं सद्बो-

वृत्तिविस्मरणं सम्यक् समाधिरभिधीयते ॥ २२ ॥
दृश्यासम्भवबोधेन रागद्वेषादितानवे ॥ २३ ॥
रतिर्बलोदिता या सा समाधिरभिधीयते ॥ २४ ॥
अहमेवपरं ब्रह्म ब्रह्माहमिति संस्थितिः ॥ २५ ॥
समाधिः स तु विज्ञेयः सर्ववृत्तिनिरोधकः ॥ २६ ॥
समाधिः संविदुत्पत्तिः परजीवैकतां प्रति ॥ २७ ॥
ध्यानस्य विस्मृतिः सम्यक् समाधिरभिधीयते ॥ २८ ॥
समाहिता नित्यतृप्ता यथाभूतार्थदर्शिनी ॥ २९ ॥
ब्रह्मन् समाधिशब्देन परा प्रज्ञोच्यते बुधैः ॥ ३० ॥
अक्षुब्धा निरहङ्कारा द्वन्द्वेष्वनुपपातिनी ॥ ३१ ॥
ब्रह्मन् समाधि शब्देन मेरोः स्थिरतरास्थितिः ॥ ३२ ॥

---

स्य योगिनः सकलवृत्तिविस्मरणमेव सम्यक् समाधिरित्यभिधीयते ॥ २१ ॥ २२ ॥

यद्दृश्यं तदसदिति बोधेन ज्ञानेन रागद्वेषादेस्तानवे अभावे सति या बलात् उदिता उत्पन्ना रतिः ब्रह्ममात्ररतिः सा समाधिरित्यभिधीयते ॥ २३ ॥ २४ ॥

जीवरूपोऽहमेव परं ब्रह्म तदेव सर्वावभासकप्रत्यग्रूपोऽहमिति संस्थितिरेव ॥ सर्ववृत्तिनिरोधकः स समाधिर्विज्ञेयः ॥ २५ ॥ २६ ॥

तत्पदत्वंपदलक्ष्ययोः परजीवयोरैक्यतां प्रति ब्रह्ममात्रसंविदुत्पत्तिरेव समाधिरुच्यते ॥ निर्विशेषं ब्रह्माऽहमिति सम्यक् ध्यानस्य विस्मृतिरेव च समाधिः ॥ २७ ॥ २८ ॥

हे ब्रह्मन् ब्रह्मातिरिक्तं न किञ्चिदस्तीति समाहिता निर्विशेषं ब्रह्मस्वमात्रमिति नित्यतृप्ता यथाभूतार्थदर्शिनी परा प्रज्ञा बुधैः समाधिशब्देनोच्यते ॥ २९ ॥ ३० ॥

हे ब्रह्मन् अक्षुब्धा कामादिवृत्तिभिर्विक्षेपरहिता देहाद्यहंभावशून्या द्वन्द्वेष्वननुपातिनी रागद्वेषादिस्फूर्तिवर्जिता मेरोरपि स्थिरतरा मनःस्थितिः समाधिशब्देनोच्यते ॥ ३१ ॥ ३२ ॥

# अथ सार्द्धान्तिकाष्टविधिस्वरूपवाक्येषु नानालिङ्गस्वरूपवाक्यानि ॥

श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः ॥ १ ॥
यो वै भूमा तत्सुखम् ॥ २ ॥
यो वै भूमा तदमृतम् ॥ ३ ॥
नेति नेति नह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेय ँ सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेव सत्यम् ॥ ४ ॥
रातिर्दातुः परायणम् ॥ ५ ॥

---

वाक्येषु यदात्मस्वरूपत्वेनाभिमतं तत्स्वप्रकटनायाष्टविधस्वरूपमहावाक्येषु । नानालिङ्गस्वरूपवाक्यान्युच्यन्ते ॥ श्रोत्रस्येत्यादिना॥ श्रोत्रादिज्ञानेन्द्रियपञ्चकमनआद्यन्तःकरणचतुष्टयवागादिकर्मेन्द्रियपञ्चकप्राणादिवायुपञ्चकेभ्यसङ्कतया तत्तद्रूपेणस्थित्वा तेषां स्वस्वविषयग्रहणशक्तिं जनयन् वस्तुतोयः स्वमात्रमवशिष्यते सोयं परमात्मा भवतीत्यर्थः ॥ १ ॥

यो वा भूमा व्यापकस्वरूपस्तदात्मस्वरूपं निरतिशयसुखम् ॥ यो वा भूमा अपरिच्छिन्नरूपस्तदमृतम् मोक्षस्वरूपमित्यर्थ ॥ २ ॥ ३ ॥

एतस्मादात्मनः परमन्यन्नेति नेति नहि नास्ति निषेधचतुष्टयोक्तिस्स्थूलसूक्ष्मकारणशरीरतदुपहितचैतन्यरूपभेदापलापाय । अथ तद्तिरिक्तं नामधेयं नाममात्रम् नामधेयविश्रान्तिस्वरूपन्तु सत्यस्य सत्यमिति तत्र प्रथमसत्यशब्दार्थस्तु प्राणा वै सत्यमिति । द्वितीयसत्यशब्दार्थस्तु तेषामेव सत्यमिति।प्राणानां विश्वविराडीशादीनामपि सत्ताप्रदं तुर्यातीतमित्यर्थः ॥ ४ ॥

रातिरिति षष्ठ्यर्थे प्रथमा रातेः सकलप्रपञ्चरूपधनस्य दातुः त्यागकर्तुः परायणम् प्रकृष्टस्थानमात्मा देहावसाने तस्यावश्यं मुक्तिर्भवति "त्यागेनैकेनामृतत्वमानशुः" इतिश्रुतेः ॥ ५ ॥

असंप्रज्ञातनामायं समाधिर्योगिनां प्रियः ॥ ४४ ॥
स्वानुभूतिरसावेशाद्दृश्यशब्दानुपेक्षितुः ॥ ४५ ॥
निर्विकल्पसमाधिः स्यान्निवातस्थितदीपवत् ॥ ४६ ॥
प्रभाशून्यं मनःशून्यं बुद्धिशून्यं चिदात्मकम् ॥ ४७ ॥
अतद्व्यावृत्तिरूपोऽसौ समाधिर्मुनिभावितः ॥ ४८ ॥
ऊर्ध्वपूर्णमधःपूर्णं मध्यपूर्णं शिवात्मकम् ॥ ४९ ॥
साक्षाद्विधिमुखो ह्येष समाधिः पारमार्थिकः ॥ ५० ॥

ओं तत्सदिति साद्धान्तिकसमाधिमहावाक्य-
रत्नावल्यां दशमप्रकरणे पञ्चाशत् ॥

---

धमात्रणावशिष्टम् चित्तं भवति सोयं योगिनां प्रियोऽसंप्रज्ञातनामा समाधिर्भवति ॥ ४३ ॥ ४४ ॥

निर्विशेषं ब्रह्मास्मीत्यनुभवे आग्रहात् दृश्यशब्दानुपेक्षितुः "शब्द-ज्ञानानुपातीवस्तुशून्योविकल्प" इति योगसूत्रोक्तदिशा सविकल्प-समाध्युपेक्षां कुर्वतो मुनेः निवातस्थितदीपवत् निर्विकल्पसमाधिः स्यात् ॥ ४५ ॥ ४६ ॥

प्रभामनोबुद्धिशब्दवाच्यावस्थात्रयशून्याधिकरणं चिदात्मकं ज्ञान-स्वरूपं ॥ तद्व्यतिरिक्तं किञ्चिन्नेत्यतद्व्यावृत्तिरूपोऽसौ निर्विकल्पकस-माधिः मुनिभिर्भावितो निश्चलो भवति ॥ ४७ ॥ ४८ ॥

ब्रह्माण्डस्योर्ध्वमध्याधः पूर्णम् सर्वत्र व्यापकमित्यर्थः शिवात्मकम् ब्रह्मस्वरूपम् ॥ अतन्निरसनंविना साक्षात् पूर्णमेवावशिष्यत इति विधिमुखं विधिमुखलक्षणः सोऽस्यास्तीति विधिमुखः विधिमुखल-क्षणोक्त इत्यर्थः एष पारमार्थिकः समाधिर्भवति ॥ ४९ ॥ ५० ॥

इति श्रीत्रिलोकनाथमिश्रप्रणीतायाम्महावाक्यरत्नावलिटीकाया-म्प्रभाभिधानायां समाधिवाक्यविवरणं सम्पूर्णम् ॥ आहत्यवाक्यान्ये-कोनसप्तत्युत्तरपञ्चशतम् ॥

---

अखण्डैकरसं तारमखण्डैकरसो जपः ॥ २० ॥
सर्ववर्जितचिन्मात्रं त्वचा मत्ता च चिन्मयम् ॥ २१ ॥
आदिरन्तञ्च चिन्मात्रं गुरुशिष्यादि चिन्मयम् ॥ २२ ॥
दृग्दृश्यं यदि चिन्मात्रमस्ति चेच्चिन्मयं सदा ॥ २३ ॥
सर्वाश्चर्यञ्च चिन्मात्रं देहश्चिन्मात्रमेव हि ॥ २४ ॥
अहन्त्वञ्चैव चिन्मात्रं मूर्त्तामूर्त्तादि चिन्मयम् ॥ २५ ॥
पुण्यं पापञ्च चिन्मात्रं जीवश्चिन्मात्रविग्रहः ॥ २६ ॥
देहत्रयविहीनत्वात् कालत्रयविवर्जनात् ॥ २७ ॥
जीवत्रयगुणाभावात्तापत्रयविवर्जनात् ॥ २८ ॥
लोकत्रयविहीनत्वात्सर्वमात्मेति शासनात् ॥ २९ ॥
चित्ताभावाच्चिन्तनीयं देहाभावाज्जरा न च ॥ ३० ॥

---

सति स्यात्तदा तत्सर्वमखण्डैकरसं ब्रह्मैवेत्यर्थः ॥ १० ॥ ११ ॥ १२ ॥ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

सर्वस्माद्वर्जितं विलक्षणरूपम् चिन्मात्रं ब्रह्मैवेत्यर्थः त्वगादिजीयान्तवस्तूनां व्यावहारिकसत्त्वे चिन्मात्रता कुत इत्यत आह त्वचेत्यादि अज्ञानिदृष्ट्या त्वगादिव्यवहारप्रसक्तौ ज्ञानिदृष्ट्या सर्वं चिन्मात्रमेवेत्यर्थः । चिन्मात्रत्वे हेतुद्वयमुपन्यस्तम् चिन्मात्रस्य वस्तुनो न कालत्रय परिच्छेदक न वा देहत्रयमितिभाव ॥ २१ ॥ २२ ॥ २३ ॥ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

चिन्मात्रत्वे हेत्वन्तरमपि जीवत्रयगुणाभावात् जीवत्रय विश्वतैजसप्राज्ञरूपम् गुणत्रयञ्च मन्तव्यम् तयोरभावात् तापत्रयविवर्जनात् आध्यात्मिकादिदुःखत्रयराहित्यात् लोकत्रयविहीनत्वात् स्वर्गमर्त्यपातालेति लोकत्रयाभावात् सर्वमात्मेति शासनात् सर्वं चिन्मात्रमिति

सपर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳशुद्धमपापविद्धम् ॥ ६ ॥
प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः ॥ ७ ॥
न निरोधो न चोत्पत्तिर्नबद्धो न च साधकः ॥ ८ ॥
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ९ ॥
अखण्डैकरसं शास्त्रमखण्डैकरसा त्रयी ॥ १० ॥
अखण्डैकरसो देहो अखण्डैकरसं मनः ॥ ११ ॥
अखण्डैकरसं सूत्रमखण्डैकरसो विराट् ॥ १२ ॥
अखण्डैकरसाविद्या अखण्डैकरसोऽव्ययः ॥ १३ ॥
अखण्डैकरसं गोप्यमखण्डैकरसः शशी ॥ १४ ॥
अखण्डैकरसं क्षेत्रमखण्डैकरसा क्षमा ॥ १५ ॥
अखण्डैकरसास्तारा अखण्डैकरसो रविः ॥ १६ ॥
अखण्डैकरसो ज्ञाता अखण्डैकरसा स्थितिः ॥ १७ ॥
अखण्डैकरसा माता अखण्डैकरसः पिता ॥ १८ ॥
अखण्डैकरसो राजा अखण्डैकरसं पुरम् ॥ १९ ॥

---

स परमात्मा परि समन्तादगात् व्यापकोऽभवत् तत्स्वरूपन्तु शुक्रं शुक्लम् अकायं देहत्रयवर्जितम् अव्रणमस्नाविरम् व्रणशिरापुञ्जरहितम् शुद्धम् अपापविद्धम् देहहेतुपुण्यपापशून्यम् ॥ ६ ॥

प्रणव एवापरं ब्रह्म प्रणवस्तु परस्तुर्यतुर्यः स्मृतः तुर्योङ्कारामविद्योतं तुर्यतुर्यमितिश्रुतेः ॥ ७ ॥

परमात्मनः न निरोधः न प्रलयः नोत्पत्तिः जीवरूपेण संसारबद्धत्वं तन्निरसनसाधकत्वं मुमुक्षुत्वं मुक्तत्वञ्च परमार्थतः स्यादित्यत आह नेत्यादिना परमात्मा कदापि बद्धः साधको मुमुक्षुर्मुक्तश्च न भवति तस्यैषानिष्प्रतियोगिकस्वमात्रतैव परमार्थता ॥ ८ ॥ ९ ॥

अखण्डैकरसं ब्रह्म तदतिरिक्तशास्त्रादिजपान्तवस्तुजातं नास्त्येव तद्वस्तुजातस्य मायाकार्यत्वात् । यदि व्यावहारिकरूपेणा शास्त्रादिव-

# अथ साद्धान्तिकपुंल्लिङ्गस्वरूपवाक्यानि ॥

स एषोऽकलोऽमृतः ॥ १ ॥

नान्तः प्रज्ञं न बहिः प्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञमदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥ २ ॥

अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैतः ॥ ३ ॥

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा ॥४॥

स एष नेति नेत्यात्मा गृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽ

---

अथ साद्धान्तिकपुंल्लिङ्गस्वरूपमहावाक्यानि लिख्यन्ते स इत्यादिना । य एष आत्मा स एष षोडशकलाराहित्यादकलः अमृतः कैवल्यरूपत्वात् कलानामानि जीवब्रह्मैक्यवाक्यप्रकरणे गताः कला इति वाक्यविवरणे दर्शितानि ॥ १ ॥

प्रज्ञावित्त्वः नान्तः प्रज्ञमित्यादिना प्रज्ञमित्यन्तयोर्घ्यं ज्ञानं व्यावहारिकं तेन रहित निरवयवत्वाददृश्यं व्यवहाराविषयत्वादव्यवहार्यम् अरूपत्वादग्राह्यम् वचाङ्मनसगोचरत्वादलक्षणम् अचिन्त्यम् अव्यपदेश्यम् व्यपदेशः अयमेवात्मेति व्यवहारः तदयोग्यम् एकात्मा तस्य प्रत्ययः ज्ञानमद्वैतज्ञानमित्यर्थः सार यस्य तत्तथोक्तम् प्रपञ्चोपशमम् प्रपञ्चापवादाधिकरण शान्तं शिवमद्वैतं यं चतुर्थं तुरीयं मन्यन्ते स आत्मा स विज्ञेयः ॥ २ ॥

मात्रा विषयस्तद्भिन्नश्चतुर्थस्तुर्यः अव्यवहार्यः प्रपञ्चोपशमः प्रपञ्चशान्त्यधिकरण शिवः अद्वैतः ॥ ३ ॥

यत्र स्वमात्रे ब्रह्मवित् स्वातिरेकेणान्यत्किञ्चिदपि रूपजातं न पश्यति शब्दजातं न शृणोति सदसद्वस्तुजातं न विजानाति स भूमा व्यापकः परमात्मोच्यते ॥ ४ ॥

यो नेति नेत्यनूद्यमानत्वाद्विलक्षणः स एष नेति नेतीति निषेधावधिः परमात्माऽवशिष्यते स कर्मेन्द्रियैर्न गृह्यते इत्यगृह्यः अग्राह्यः यो न

पादाभावाद्गतिर्नास्ति हस्ताभावात्क्रिया न च ॥ ३१ ॥
मृत्युर्नास्ति जनाभावाद्बुद्ध्यभावात्सुखादिकम् ॥ ३२ ॥

ओं तत्सदिति सार्द्धान्तिकनानालिङ्गस्वरूपवाक्यानि
महावाक्यरत्नावल्यामेकादशप्रकरणे द्वात्रिंशत्
आहत्यवाक्यसङ्ख्या एकोत्तरषट्शतम् ॥



भूतेष्व त्यत्तादिजीवनान्तवस्तुजातं चिन्मात्रमित्यर्थः ॥ २८ ॥ २९ ॥ ॥ ३० ॥ ३१ ॥ ३२ ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायाम्महावाक्यरत्नावलि-टीकायाम्प्रभाभिधानायान्नानालिङ्गस्वरूपवाक्यविवरणं सम्पूर्णम् ॥ आहत्यवाक्यान्येकोत्तरषट्शतम् ॥ ६०१ ॥



स्य द्रष्टा तमसो द्रष्टा सर्वस्य द्रष्टा तत् सर्वस्मादन्यो विलक्षणः सद्घनोऽयं चिद्घन आनन्दघन एवैकरसोऽव्यवहार्यः ॥ ९ ॥
सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वयानन्दः परः प्रत्यगेकरसः ॥ १० ॥
अदृष्टोऽव्यवहार्योऽप्यल्पोऽनाल्पः साक्ष्यविशेषः सर्वज्ञोऽनन्तोऽभिन्नोऽद्वयोविदिताऽविदितात्परः ॥ ११ ॥
अद्वैतपरमानन्दो विभुर्नित्यो निष्कलङ्को निर्विकल्पो निरञ्जनो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित् ॥ १२ ॥
अचक्षुर्विश्वतश्चक्षुरकर्णो विश्वतः कर्णो अपादो विश्वतः पाद

---

स्तत्सर्वस्मादन्यो विलक्षणः सद्घनोऽयं चिद्घन आनन्दघन एव एकरसः सच्चिदानन्दमात्रैकरूपः अतोऽव्यवहार्यः व्यवहार्यप्रपञ्चाभावादव्यवहार्य्यः व्यवहाराऽयोग्यः ॥ ९ ॥

सन्मात्रः केवलसत्तारूपः नित्यः शुद्धः बुद्धः बोधरूपः सत्यः मुक्तः निरञ्जनः निर्मायः विभुः व्यापकः अद्वैतः अद्वितीयः आनन्दः परमात्मा प्रत्यगेकरसः प्रत्यगभिन्नः ॥ १० ॥

अनिदं रूपत्वात् केनाप्यदृष्टोऽव्यवहार्यः " अणोरणीयान् महतो महीयान् " इति श्रुत्याऽल्पोपि नाल्पः अपरिमितत्वात् साक्षी वस्तुतोऽविशेषः निर्विशेषः सर्वज्ञः अनन्तः अभिन्नः अद्वयः मूर्त्तत्वेन विदितादमूर्त्तत्वेनाविदितादपि परः सर्ववैलक्षण्यात् ॥ ११ ॥

अद्वैतः परमानन्दः विभुः व्यापकः नित्यः मायारूपकलङ्काभावान्निष्कलङ्कः निर्विकल्पः निरञ्जन शुभ्रः स्वातिरिक्ताख्यासामान्याभावान्निराख्यातः दीप्यमानत्वाद्देवः यत्र सूरयो न रमन्ते तन्नारमविद्या तत्कार्यजातं तदयनादस्यायनमधिष्ठानं नारायण उच्यते स एक एव तस्य द्वितीयो न कश्चिदस्तीत्यर्थः ॥ १२ ॥

अहं परमात्मा निर्विशेषरूपेण चक्षुरादिसकलकरणावयवविरलः सविशेषविराड्रूपेण चक्षुरादिसकलकरणावयववानस्मि वस्तुतो

सङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यति ॥ ५ ॥
रसघन एवैवं वाऽरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव ॥ ६ ॥
तस्मान्मनो विलीने मनसि गते सङ्कल्पविकल्पे दग्धे पुण्यपापे सदा शिवः ओं शक्त्यात्मकसर्वत्रावस्थितिः स्वयं ज्योतिः शुद्धो नित्यो निरञ्जनः शान्ततमः प्रकाशयति ॥ ७ ॥
एष शुद्धः पूतः शून्यः शान्तोऽप्राणो नीशात्मानन्तोऽक्षय्यस्थिरः शाश्वतोऽजः स्वतन्त्रः स्वे महिम्नि तिष्ठति ॥ ८ ॥
चक्षुषो द्रष्टा श्रोत्रस्य द्रष्टा मनसो द्रष्टा वाचो द्रष्टा बुद्धेर्द्रष्टा प्राण-

---

हि शीर्यते जीर्यते सोऽशीर्यः अशरीरत्वात् यः केनापि न हि सज्जते सोऽसङ्गः अमूर्तत्वात् अत एवायमसितोऽबद्धः न व्यथते पीडामाप्नोति न रिष्यति नश्यति बन्धनार्थकषिञ्धातोः क्तप्रत्यये सित इति ॥ ५ ॥

अरे मैत्रेयि अयमात्मा रसघन एव आनन्दघन एव एवं वा अनन्तरः अबाह्यः अन्तर्बाह्यविभागशून्यः अत एव कृत्स्नः अत एव व्यापकः वस्तुतोऽयं प्रकर्षेण ज्ञानघन एव चिन्मात्रत्वात् ॥ ६ ॥

तस्मात्समाधेः मनोविलीने मनोविलये मनसि सङ्कल्पविकल्पे मनोवृत्तिसङ्कल्पविकल्पे गते पुण्यपापे च दग्धे सदाशिवः ॐ शक्त्यात्मकः प्रणवशक्तिस्वरूपः सर्वत्रावस्थितः स्वयं ज्योतिः सर्वव्यापकतया स्वयं ज्वलतीति तथोक्तः अतः शुद्धो नित्यो निरञ्जन शान्ततमः अतिशयेन शान्तः प्रकाशयति प्रकाशते स्वार्थिको णिच् ॥ ७ ॥

एष परमात्मा स्वभावतः शुद्धः पूतः शून्यः अन्तःकरणशून्यः शान्तः अप्राणः जीवरूपेण स्वातन्त्र्याभावात् अनीशात्मा आत्मनोऽनीशः अनन्तः अपरिच्छिन्नः अक्षय्यः जायतेऽस्ति वर्धते विपरिणमते अपक्षीयते नश्यतीति षड्भावविकाररहितः स्थिरः सत्तारूपः शाश्वतः चिरन्तनः अजः स्वतन्त्रः स्वे महिम्नि निर्विशेषरूपेण तिष्ठति ॥ ८ ॥

चक्षुरादिदशेन्द्रियान्तःकरणचतुष्टयस्य प्राणादिपञ्चकस्य तत्कारणेनमसश्चापि द्रष्टृत्वादयमात्मा सर्वस्य द्रष्टा साक्षी ततः स्वदर्शि-

सर्वसङ्कल्परहितः सर्वनादमयः शिवः ॥ २० ॥
सर्ववर्जितचिन्मात्रः सर्वानन्दमयः परः ॥ २१ ॥
सर्वानुभवनिर्मुक्तः सर्वध्यानविवर्जितः ॥ २२ ॥
आत्माऽनात्मविवेकादिभेदाभेदविवर्जितः ॥ २३ ॥
महावाक्यार्थतो दूरो ब्रह्मास्मीत्यतिदूरतः ॥ २४ ॥
तच्छब्दवर्ज्यस्त्वंशब्दहीनो वाक्यार्थवर्जितः ॥ २५ ॥
क्षराक्षरविहीनो यो नादान्तर्ज्योतिरेव सः ॥ २६ ॥
अखण्डैकरसो वाऽहमानन्दोऽस्मीति वर्जितः ॥ २७ ॥
दृश्यदर्शननिर्मुक्तः केवलामलरूपवान् ॥ २८ ॥

---

मनोरूपकरणाभावात्सर्वसङ्कल्परहितः सर्वनादमयः आत्ममन्त्रप्रणवादिनादप्रचुरो वस्तुतः शिव एव ॥ २० ॥

सर्वोपाधिवर्जितः अत एव चिन्मात्रः सर्वानन्दमयजीवकोशभेदात्सर्वानन्दमयः परः परमात्मा ॥ २१ ॥

सर्वानुभवनिर्मुक्तःसर्वावस्थानुभवातिरिक्तः देहादिसाक्ष्यन्तध्यानवर्जितः ॥ आत्माऽनात्मनोर्विवेकादिः विवेकाविवेकौ एवं भेदाभेदौ तैर्वर्जितः ॥ महावाक्यजातस्य प्रत्यक्परैक्यमर्थः तादृशैक्यवृत्तितो दूरवर्ती ब्रह्माहमस्मीति वृत्तितोऽप्यतिदूरः ॥ तत्त्वमसीति महावाक्यसम्बन्धपदवाक्यार्थविरलत्वात् तच्छब्दविरलस्त्वंशब्दहीनो वाक्यार्थवर्जितो निर्विशेषः परमात्मा इत्यर्थः ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

यः क्षरः प्रपञ्चस्तदारोपाधारोऽक्षर ईश्वर इति विभागहीनो भवति सोऽयं ब्रह्म प्रणवनादान्तर्विद्योतमानज्योतीरूपो भवति ॥ २६॥

अहमखण्डैकरसो वा आनन्दश्चास्मीत्यादिवृत्तेर्मायिकत्वात्तद्वर्जितः ॥ २७ ॥

दृश्यं घटादि तद्विषयज्ञानं दर्शनं तद्विनिर्मुक्तः केवलनिर्विशेषतया निर्मल इत्यर्थः ॥ २८ ॥

अपाणिर्विश्वतःपाणिरशिरा विश्वतःशिरा विद्यामात्रैकसंश्रयो विद्यारूपः ॥ १३ ॥
दिव्यो ह्यमूर्त्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः ॥ १४ ॥
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥ १५ ॥
अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः ॥ १६ ॥
अपूर्वोऽनन्तरो बाह्यो न परः प्रणवोऽव्ययः ॥ १७ ॥
अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ॥ १८ ॥
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ।१९।

विद्यामात्रैकसंश्रयो विद्यारूपः स्वातिरिक्तमानमेयाभावाद्विद्याश्रयत्वं विद्यारूपत्वञ्चोपपद्यत इत्यर्थः ॥ १३ ॥

दिवि स्वे महिम्नि भवतीति दिव्यः सर्वमूर्त्तिवर्जितत्वादमूर्त्तः पुरि शरीरे शेते इति पुरुषः प्रपञ्चे बाह्याभ्यन्तरेण सह वर्त्तते इतिसबाह्याभ्यन्तरः न जायते इत्यजः ॥ क्रियाः ज्ञानेच्छाशक्यात्मकप्राणपञ्चकान्तःकरणचतुष्टयाभावादप्राणो ह्यमनाः प्रकाशमात्ररूपत्वाच्छुभ्रः अक्षरादीश्वरात्परः साक्षी तस्मादपि परः परमात्मेत्यर्थः ॥ १४ ॥१५॥

विश्वविराडीशादिभावानां द्वैतवज्ञानेऽपि तद्पवादाधारो देवस्तुर्यो विभुरद्वैत इतिस्मृत ॥ १६ ॥

स्वतोऽन्यकारणाभावादपूर्वः तथाकार्याभावादनन्तरः स्वस्माद्बाह्यत्वाभावादबाह्यः स्वस्मादपरत्वाभावादनपरः निरवत्वादव्ययः प्रणवः परमात्मावशिष्यते इत्यर्थः ॥ १७ ॥

अकारादिमात्राऽभावादमात्रः पराभिधानानन्तमात्रारूपत्वादनन्तमात्रः द्वैतस्योपशमः द्वैतस्योपशमो निवृत्तिर्य्यस्मिन् स तथोक्तः शिवः परमात्मेत्यर्थः ॥ १८ ॥

ईश्वरस्वरूपेण निखिलकर्मफलप्रदत्वात्कर्माध्यक्षः सर्वान्तर्यामिरूपत्वात्सर्वभूताधिवासः साक्षी चेतयतीति चेता इत्येकार्थकम् केवलः अविशेषशेषरहितः निर्गुणश्च ॥ १९ ॥

# अथ सार्द्धान्तिकस्त्रीलिङ्गस्वरूप-महावाक्यानि ।

अलौकिकपरमानन्दलक्षणाऽखण्डाऽमिततेजोराशिः ॥ १ ॥

भावाऽभावकलाविनिर्मुक्ता चिद्विद्या अद्वितीयब्रह्मसम्वित्तिः सच्चिदानन्दलहरी महात्रिपुरसुन्दरी बहिरन्तरनुप्रविश्य स्वयमेकैव विभाति ॥ २ ॥

सर्वसङ्कल्परहिता सर्वसंज्ञाविवर्जिता ॥ ३ ॥

सैषा चिदविनाशात्मा स्वात्मेत्यादिकृताभिधा ॥ ४ ॥

आकाशशतभागाच्छा ज्ञेषु निष्कलरूपिणी ॥ ५ ॥

---

अथ सार्धान्तिकस्त्रीलिङ्गस्वरूपमहावाक्यानि लिख्यन्ते अलौकिकेत्यादिना—अलौकिकपरमानन्दस्वरूपा अखण्डामिततेजोराशिरूपिणी चिदस्ति ॥ १ ॥

श्रोत्रादिग्राह्यशब्दादिर्भावकला मनआदिग्राह्यसङ्कल्पादिरभावकला तदुभयनिर्मुक्ता चिदस्मीति वेदनीयत्वाच्चिद्विद्या अद्वितीयत्वेनोपबृंहणात् ब्रह्मविद्वरिष्ठैः सम्वेदनीयस्वरूपत्वादद्वितीयब्रह्मसम्वित्तिः सच्चिदानन्दलहरी पूर्णप्रवाहरूपिणी भूर्भुवःस्वरिति त्रिपुरोपलक्षितानन्तकोटिब्रह्माण्डान्यधिष्ठाय या शोभते सा महती चासौ त्रिपुरसुन्दरी महात्रिपुरसुन्दरी अत्र प्राजापत्यवैष्णवं विलयकारणं रूपमाश्रित्य भूर्भुवःस्वर्लोकाणि पुराणि या व्याप्नोति सैवेयं भगवती त्रिपुरेति श्रुतिः प्रमाणम् । सा देवी बहिः जीवरूपेणान्तः परमात्मरूपेणचानुप्रविश्य वर्त्तते वस्तुतः स्वावशेषतया सर्वं ग्रसित्वा स्वयमेकैव विभाति अद्वितीयत्वादित्यर्थः ॥ २ ॥

अन्तःकरणवृत्तिसमूहाभावात् सर्वसङ्कल्परहिता सर्वाभिधानरहिता ॥ सैषा चित् अविनाशात्मा स्वात्मेत्यादिना कृताभिधा नाम यस्यास्तथोक्ता ॥ आकाशादपि शतभागाच्छा अत्यन्तनिरवयवा ज्ञेषु ब्रह्मविद्वरिष्ठेषु निष्कलरूपिणी प्राणादिनामान्तषोडशकलारहिता वा कालत्रयेऽप्यविनाशस्वरूपिणी ॥ ३ ॥ ४ ॥ ५ ॥

नित्योदितो निराभासो द्रष्टा साक्षी चिदात्मकः ॥ २९ ॥
स एव विदितादन्यस्तथैवाविदितादपि ॥ ३० ॥

ओं तत्सदिति साद्धान्तिकपुल्लिङ्गस्वरूपमहावाक्यानि महावाक्यरत्नावल्यां द्वादशप्रकरणे त्रिंशत् ॥

---

यः सद्रूपत्वेन नित्योदितः उदयाऽस्तमयाऽऽभासाऽभावान्निराभासः जीवरूपेण व्यष्टिप्रपञ्चद्रष्टा ईश्वररूपेण समष्टिप्रपञ्चसाक्षी वस्तुतश्चिदात्मकश्चिद्रूपो भवति स एव विदितात् स्थूलादन्यः अविदितात् सूक्ष्मात् तथैव अन्यः भवतीत्यर्थः ॥ २९ ॥ ३० ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायाम्महावाक्यरत्नावलिटीकायाम्प्रभाभिधानायाम्पुल्लिङ्गस्वरूपवाक्यविवरणं सम्पूर्णम् ॥ आहत्यवाक्यान्येकत्रिंशदधिकषट्शतम् ॥ ६३१ ॥

# अथ नपुंसकलिङ्गस्वरूपवाक्यानि ॥

अन्यदेव तद्विदितादथो अविदितादधि ॥ १ ॥
यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् ॥ २ ॥
सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ ३ ॥
अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाश-मसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखम मात्रमनन्तरमबाह्यम् ॥ ४ ॥

---

अथ सार्द्धान्तिकनपुंसकलिङ्गस्वरूपमहावाक्यान्युच्यन्ते अन्यदेवे-त्यादिना। तद्ब्रह्मविदितात् चिद्रूपत्वेन ज्ञातात् अन्यत् अथो अनन्तरम् निराकारत्वेन अविदितात् चक्षुरविषयात् अधि अन्यत् तस्य विलक्षणरूपत्वात् ॥ १ ॥

यत्तत् अद्रेश्यमदृश्यमचाक्षुषत्वात् अग्राह्यमनिन्द्रियवस्तुत्वात् अ-गोत्रं स्थूलदेहविलक्षणत्वात् अवर्णं ज्ञानकर्मेन्द्रियातीतत्वादचक्षुःश्रोत्र मपाणिपाद तद्ब्रह्म तस्य निरवयवत्वेन शरीरत्रयातीतत्वात् ॥ २ ॥

हे सौम्य इदमाविद्यकं जगत् अग्रे सृष्टेः पुरा तदनन्तरमपि सदेव ब्रह्मैवासीत् जगतः सदतिरिक्तसत्ताभावात् तत् ब्रह्म एकमेव एक शब्दः सजातीयभेदनिरासकः ब्रह्मान्तराभावात् एवशब्दो विजातीय भेदनिरासकः गोमहिष्यादिवद्विजातीयाभावात् अद्वितीयशब्दस्तु स्व गतभेदनिरासकः ब्रह्मणो निर्विशेषत्वेन नखकेशादिवत्स्वगतभेदरा हित्यात् ॥ ३ ॥

बुद्धेरपि सूक्ष्मत्वादस्थूलं खादपि बृहत्त्वादनणु निष्परिमाणत्वादह्र स्वमदीर्घं रजआदिगुणत्रयाभावादलोहितं द्रवत्वाभावादस्नेहम् अमू र्तत्वादच्छायम् आविद्यकमोहाभावादतम अभूतभौतिकत्वादवाय्व नाकाशम् अरसमगन्धम् स्वसजातीयद्वितीयवस्त्वभावादसङ्गम् कर्मे न्द्रियज्ञानेन्द्रियाभावादचक्षुष्कमश्रोत्रमवाक् अन्तःकरणाभावादमन अतेजस्कम् पञ्चप्राणाभावादप्राणम् निरवयवत्वादमुखम् अपरिच्छि न्नत्वादमात्रम् अन्तरबाह्यसम्बन्धाभावादनन्तरमबाह्यम् ॥ ४ ॥

नास्तमेति न चोदेति नोत्तिष्ठति न तिष्ठति ॥ ६ ॥
न च याति न चायाति न च नेह न चेहचित् ॥ ७ ॥
सैषा चिदमलाकारा निर्विकल्पा निरास्पदा ॥ ८ ॥
महाचिदेकैवेहास्ति महासत्तेति चोच्यते ॥ ९ ॥
निष्कलङ्का समा शुद्धा निरहङ्काररूपिणी ॥ १० ॥
सकृद्विभाता विमला नित्योदयवती समा ॥ ११ ॥
सा ब्रह्म परमात्मेति नामभिः परिगीयते ॥ १२ ॥

ओं तत्सदिति सार्द्धान्तिकस्त्रीलिङ्गस्वरूपमहावाक्यानि
महावाक्यरत्नावल्यां प्रकरणे द्वादश ॥

निर्विशेषब्रह्मरूपिणी चित् सूर्यादिवदुदयास्तमयादिविकृतिं नैति मूर्त्तामूर्त्तविलक्षणत्वेन निर्विकारत्वात् ॥ तत्र न च नेह न चेह चिदित्यस्य इह प्रपञ्चे चिन्न नास्ति किन्तु अस्त्येव अव्यक्तरूपत्वात् च पुनः इह प्रपञ्चे चिन्नास्त्येव व्यक्तरूपेण अयमर्थो वेदितव्यः ॥ सैषा चित् ब्रह्मरूपेणाऽमलाकारा सङ्कल्पाभावान्निर्विकल्पा स्वातिरिक्ताधिष्ठेयाभावान्निरास्पदा निरधिष्ठानतयाऽवशिष्यते ॥ ६ ॥ ७ ॥ ८ ॥

या महासत्ता महासामान्यरूपिणी इह महाचिदेकैवास्तीति चोच्यते परमाद्वयरूपत्वात् ॥ या कलङ्काभावान्निष्कलङ्का अविद्याकृतवैषम्याभावात्समा शुद्धा निरहङ्काररूपिणी ॥ सदेवासीदित्यादावृत्तिमयशून्यतया सकृद्विभाता सदा विभातेत्यर्थः अत एव चिन्मात्रत्वाद्विमला स्वस्वरूपत्वेन नित्योदयवती एकरसरूपत्वात्समा सैव ब्रह्मपरमात्मेत्यादिनामभिर्गीयते ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

इति मैथिलश्रोत्रियगोकुलनाथमिश्रप्रणीतायाम्महावाक्यरत्नावलिटीकायाम्प्रभाभिधानायां स्त्रीलिङ्गस्वरूपवाक्यविवरणं संपूर्णम् ॥
आदितः वाक्यानि त्रिचत्वारिंशदधिकं षट्शतम् ॥ ६४३ ॥

तद्ब्रह्मतापत्रयातीतं षट्कोशविनिर्मुक्तं षडूर्मिवर्जितम् पञ्चकोशातीतं षड्भावविकारशून्यमेवमादिसर्वविलक्षणम् ॥ ८ ॥

निर्गुणं निरुपस्रवं ज्योतिराभ्यन्तरं सर्वमायातीतमप्रत्यगेकरसमद्वितीयम् ॥ ९ ॥

तज्ज्योतिरेकमद्वितीयं सर्वकल्पनातीतं ध्रुवमक्षरमेकं सदा चकास्ति सच्चिदानन्दम् ॥ १० ॥

यत्तत्सत्यं विज्ञानमानन्दं निष्क्रियं निरञ्जनं सर्वगतं सुसूक्ष्मं सर्वतोमुखमनिर्देश्यममृतं निष्कलम् ॥ ११ ॥

एकमद्वैतं निष्कलं निष्क्रियं शान्तं निरतिशयमनामयमद्वैतं चतुर्थं

---

तद् ब्रह्म आध्यात्मिकादितापत्रयातीतम् त्वगसृधिरमांसमेदोमज्जास्थीनि षट्कोशाः तैर्विरहितम् अशनायापिपासाशोकमोहजरामरणानीति षडूर्मयः तद्वर्जितम् अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाः पञ्चकोशाः तद्वर्जितम् जायतेऽस्ति वर्द्धते विपरिणमते अपक्षीयते विनश्यतीति षड्भावविकारशून्यमेवमादि सर्वविलक्षणं ॥ ८ ॥

निर्गुणम् स्थूलशरीराभावाभिरुपस्रवं निरुपद्रवम् आभ्यन्तरं ज्योतिरन्तर्ज्योतिः सर्वमायातीतम् अप्रत्यगेकरसम् अप्रत्यक्जीवलक्षणम् एकरसम् अच्युतस्वरूपम् अद्वितीयम् ॥ ९ ॥

तज्ज्योतिः ब्रह्म एकमद्वितीयं सर्वैः मनुष्यादिभिःकल्पना स्वरूपकल्पना तयाऽतीतम् सन्मात्रत्वाद्ध्रुवम् एकम् अक्षरम् प्रणवस्वरूपम् सच्चिदानन्दरूपम् सदा चकास्ति प्रकाशते इत्यर्थः ॥ १० ॥

कालत्रयाबाध्यत्वाद् यत्तदनिर्वचनीयं सत्यं विज्ञप्तिमात्रत्वाद्विज्ञानम् आनन्दैकरूपम् निष्क्रियम् निरञ्जनम् सर्वव्यापकत्वात्सर्वगतं केशकोट्यंशैकभागादपि सूक्ष्मत्वात्सुसूक्ष्मम् वैराजत्वात्सर्वतोमुखं निर्द्देष्टुमशक्यत्वादनिर्देश्यम् अमृतम् निष्कलम् ब्रह्मावशिष्यते ॥११॥

एकम् अद्वैतं निष्कलं निरवयवम् क्रियारहितम् शान्तम् निरतिशयम् काष्ठातीतम् अनामयम् निरुपद्रवम् अद्वैतम् चतुर्थं तुरीयमत

नित्यं शुद्धं मुक्तं सत्यं सूक्ष्मं परिपूर्णमद्वयं सदानन्दचिन्मात्रं पुरतः सुविभातमविभातमद्वैतमचिन्त्यमलिङ्गं स्वप्रकाशमानन्दघनम् ॥ ५ ॥

एतद्ध्यशब्दमस्पर्शमरूपमरसमगन्धमवक्तव्यमदातव्यमगन्तव्यमविसर्जयितव्यमनानन्दयितव्यममन्तव्यमबोद्धव्यमनहङ्कर्तयितव्यमचेतयितव्यमप्राणमितव्यमपानयितव्यमव्यानयितव्यमनुदानयितव्यमसमानयितव्यमनिन्द्रियमविषयमकरणमलक्षणमसङ्गमगुणमविक्रियमव्यपदेश्यमसत्त्वमरजस्कमतमस्कममायमभयमप्यौपनिषदमेव सुविभातं सकृद्विभातं पुरतोऽस्मात्सुविभातमद्वयम् ॥ ६ ॥

अनिर्वचनीयज्योतिः सर्वव्यापकं निरतिशयानन्दलक्षणं परमाकाशम् ॥ ७ ॥

---

नित्यं शुद्धं मुक्तं सत्यं सूक्ष्मं परिपूर्णमद्वयं सद्रूपम् आनन्दरूपम् चिद्रूपम् सर्वस्मात् पुरतः अग्रे सुखेन भातत्वात् सुविभातम् सूर्यादिभिरभातत्वादविभातम् द्वैताभावादद्वैतम् अनिर्वचनीयत्वादचिन्त्यम् वेदान्तेतरस्वगमकलिङ्गाभावादलिङ्गम् स्वेनात्मना प्रकाशते यत्तथोक्तम् आनन्दघनम् आनन्दपूर्णमित्यर्थः ॥ ५ ॥

एतद्ब्रह्म ज्ञानेन्द्रियविषयाभावादशब्दमित्यादि अत एवाव्यक्तम् कर्मेन्द्रियविषयाभावादवक्तव्यमित्यादि मनआद्यन्तःकरणविषयाभावादमन्तव्यमित्यादि प्राणपञ्चकविषयाभावादप्राणयितव्यमित्यादि श्रोत्रादिदशेन्द्रियाभावादनिन्द्रियम् तद्विषयसामान्याभावादविषयम् मनआद्यन्तःकरणाभावादकरणम् स्वातिरिक्तलक्षणाभावादलक्षणम् सञ्जनीयाभावादसङ्गम् गुणसामान्याभावादगुणम् विकाराभावादविक्रियम् निर्विशेषत्वादव्यपदेश्यम् सत्त्वादिगुणत्रयाभावादसत्त्वमित्यादि निर्मायत्वादमायम् अद्वयत्वादभयम् उपनिषदेकवेद्यत्वादौपनिषदमेव सुविभातम् समाहितवृत्तिविषयत्वात्सकृद्विभातम् अस्मात्स्वातिरिक्तविषयसमूहादपि पुरतः पूर्वमेव प्रत्यग्रूपेण सुविभातमद्वयम् ॥ ६ ॥

अव्याख्येयज्योति सर्वव्यापकं काष्ठातीतानन्दतया लक्षणीयत्वान्निरतिशयानन्दलक्षणम् परमाकाशं चिदाकाशमित्यर्थः ॥ ७ ॥

अरेफजातमुभयोष्मवर्जितं यदक्षरं न क्षरते कथञ्चित् ॥ १९ ॥
अगोचरं मनोवाचामवधूतादिसंस्तवम् ॥ २० ॥
सत्तामात्रप्रकाशैकप्रकाशं भावनातिगम् ॥ २१ ॥
अहेयमनुपादेयमसामान्यविशेषणम् ॥ २२ ॥
ध्रुवं स्तिमितगम्भीरं न तेजो न तमस्ततम् ॥ २३ ॥
निष्कलं निर्मलं शान्तं सर्वातीतं निरामयम् ॥ २४ ॥
न शून्यं नापि चाकारि न दृश्यं नापि दर्शनम् ॥ २५ ॥
चिन्मात्रं चैत्यरहितमनन्तमजरं शिवम् ॥ २६ ॥
चैत्यानुपातरहितं सामान्येन च सर्वगम् ॥ २७ ॥
अनामयमनाभासमनामकमकारणम् ॥ २८ ॥

---

घोष्याभावादरेफजातम् यत् तालुकण्ठोष्ठं व्याप्य कथञ्चिदपि क्षरते तद्व्यापारैर्नाविर्भवति तदेव निर्विशेषरूपेणावशिष्यते अक्षरञ्च यद् तालु इति पाठान्तरम् ॥ अनेन स्थानानि निषिध्यन्ते चकारादनुच्चस्थाननिषेधो बोद्धव्य. ॥ १८ ॥ १९ ॥

मनोवाचामगोचरमविषयम् अवधूतादीनां कुटीचकबहूदकपरमहंसावधूतानां संसारसन्तरणसाधनम् ॥ सत्तामात्रप्रकाशो ब्रह्माहमस्मीति बोधस्तस्यैकप्रकाशमसाधारणप्रकाशकम् इत्यतिरिक्तभावनातिक्रान्तम् ॥ २० ॥ २१ ॥

हेयरूपगुणत्रयाभावादहेयम् उपादेयगुणसामान्याभावादनुपादेयम् असामान्यविशेषणम् सामान्यविशेषरहितम् ॥ कूटस्थत्वात् ध्रुवम् निस्तरङ्गचिदब्धित्वात्स्तिमितगम्भीरम् तत व्यापकम् तेजो न तमो च न सर्वातीतं निष्कल निर्मलं शान्तं निरामय ब्रह्मेत्यर्थः ॥२२॥२३॥२४॥

न शून्यं नापि चाकारि आकारवत् विषयविषयिणोर्ज्ञानाभावात् न दृश्य नापि दर्शनम् ॥ चैत्यरहित विषयरहितम् चिन्मात्रम् अनन्तम् अजरम् शिवम् ॥ सामान्येन साधारणतया सर्वगतमपि चैत्यानुपातरहितम् विषयसम्बन्धरहितम् ॥ अनामय निरुपद्रवम् स्वाति-

ब्रह्म विष्णुरुद्रातीतमेकमाशास्यम् ॥ १२ ॥
अद्वयमनाद्यन्तमशेषवेदवेदान्तवेद्यमनिर्देश्यमनिरुक्तमच्यवमाशास्यमद्वैतं चतुर्थं सर्वाऽऽधारमनाऽऽधारमनिरीक्ष्यम् ॥ १३ ॥
अशब्दमस्पर्शमरूपमव्ययं तथा रसन्नित्यमगन्धवच्च यत् ॥ १४ ॥
परं विज्ञानाद्वरिष्ठं प्रजानां यदर्चिमद्यदणुभ्योऽणु च ॥ १५ ॥
बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति ॥ १६ ॥
एतत् ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित् ॥१७॥
अघोषमव्यञ्जनमस्वरञ्च यत्तालुकण्ठोष्ठमनासिकञ्च यत् ॥१८॥

---

एवम्ब्रह्मविष्णुरुद्रातीतम् आशास्यम् ब्रह्मादीनामप्येकं मुख्यमाशास्यमिच्छाविषयीभूतम् ॥ १२ ॥

उत्पत्तिप्रलयाभावादनाद्यन्तम् अशेषवेदवेदान्तवेद्यम् अनिर्देश्यम् अनिरुक्तमनाख्यातम् कदापि स्वस्वरूपतोऽच्युतत्वादच्यवम् आशास्यम् अद्वैतम् चतुर्थम् तुरीयम् प्रपञ्चसत्त्वे तदाधारभूतं वस्तुतस्त्वनाधारम् ब्रह्माऽहमस्मीति भावनां विना अनिरीक्ष्यम् ॥ १३ ॥

अक्षरत्वादव्ययं ब्रह्माऽशब्दमित्यादिविशेषणबोधितं यत् प्रजानां विज्ञानात् स्वातिरिक्तविषयकविज्ञानात् परं भिन्नं वरिष्ठं श्रतिमात्रत्वाच्चन्द्रसूर्यादिभ्योऽर्चिमत् प्रकाशकं यदणुभ्यो बुद्धिवृत्तिभ्योऽप्यणु आकाशादपि बृहच्च यत् सूक्ष्मजन्तोः निर्विशेषतया सूक्ष्मतरं विभाति तदचिन्त्यरूपं ब्रह्म दिवि स्वे महिम्नि भवतीति दिव्यं स्वप्रतिष्ठान्तरभावादित्यर्थः ॥ १४ ॥ १५ ॥ १६ ॥

प्रत्यगभिन्नब्रह्मरूपेण नित्यमेवात्मसंस्थं स्वरूपप्रतिष्ठमेतद्ब्रह्म ज्ञेयम् अतः परं किञ्चिदपि न वेदितव्यम् ॥ १७ ॥

यत्परमाक्षरं ब्रह्म प्रयत्नविशेषस्वरूपाभावादघोषं हल्संज्ञकवर्णस्वरूपाभावादव्यञ्जनम् अकारादिस्वराभावादस्वरम् उभयोष्मवर्जितम् सषशहाऊष्माणः " वर्गे वर्गे प्रथमावघोषौ युग्मौ सोष्माणावनुनासिकोऽन्त्य " इति प्रातिशाख्योक्तदिशा द्विविधोष्मवर्णाबोध्यम् अनासिकम् नासिकास्थानीयवर्णाबोध्यम् रसत्याद्याहारादि-

स्वच्छं विभाति शरदीव खमागतायां चिन्मात्रमेकमजमाद्यमनन्त-मन्तः ॥ ३९ ॥

श्रीं तत्सदिति सार्द्धान्विकनपुंसकलिङ्गस्वरूपमहावाक्यानि महा-वाक्यरत्नावल्यां चतुर्दशप्रकरणे एकोनचत्वारिंशत् ॥

---

निर्विशेषतयाद्यं चिन्मात्रमेकम् अजम् अनन्तम् स्वच्छं विभाती-त्यर्थः ॥ ३८ ॥ ३९ ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायाम्महावाक्यरत्नावलि-टीकायाम्प्रभाभिधानायान्नपुंसकलिङ्गवाक्यविवरणं सम्पूर्णम् ॥ आहत्यवाक्यानि द्व्यशीत्यधिकपट्शतम् ॥ ६८२ ॥

मनोवचोभ्यामग्राह्यं पूर्णात्पूर्णं सुखात्सुखम् ॥ २९ ॥
द्रष्टृदर्शनदृश्यादिवर्जितं तदिदं पदम् ॥ ३० ॥
शुद्धं सूक्ष्मं निराकारं निर्विकारं निरञ्जनम् ॥ ३१ ॥
अप्रमाणमनिर्देश्यमप्रमेयमतीन्द्रियम् ॥ ३२ ॥
निर्लेपकं निरापायं कूटस्थमचलं ध्रुवम् ॥ ३३ ॥
सद्घनं चिद्घनं नित्यमानन्दघनमव्ययम् ॥ ३४ ॥
प्रत्यगेकरसं पूर्णमनन्तं विश्वतोमुखम् ॥ ३५ ॥
अहेयमनुपादेयमनादेयमनाश्रयम् ॥ ३६ ॥
शुद्धं बुद्धं सदा मुक्तमनामकमरूपकम् ॥ ३७ ॥
सङ्कल्पसंचयवशाद्गलिते तु चित्ते संसारमोहमिहिकागलिता भवन्ति ॥ ३८ ॥

---

रिकाभासाभावादनाभासम् नामरूपतत्कार्याभावादनामकमकारणम् ॥ वाङ्मनसागोचरम् पूर्णादाकाशादपि पूर्णम् सातिशयसुखादपि सुखम् ब्रह्मसुखस्य निरतिशयत्वात् ॥ यत्पदं दृष्ट्यादि त्रिपुटीविरलं तदिदं ब्रह्मेत्यर्थः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥

शुद्धं सूक्ष्मं निराकारं निर्विकारं निरञ्जनम् निर्मायम् ॥ प्रत्यक्षादिप्रमाणागम्यत्वादप्रमाणम् निर्देष्टुमशक्यम् वैषयिकप्रमेयाभावादप्रमेयम् इन्द्रियागम्यत्वादतीन्द्रियम् ॥ अविद्या तत्कार्यलेपाभावान्निर्लेपकम् नित्यत्वान्निरापायम् अविकारित्वात् कूटस्थम् अचलं ध्रुवम् ॥ सद्घनं चिद्घनं नित्यम् आनन्दघनम् अव्ययम् ॥ प्रत्यगभिन्नत्वात्प्रत्यगेकरसम् पूर्णम् अनन्तम् विराड्त्वाद्विश्वतोमुखम् ॥ अस्वरूपत्वादहेयमित्यादि अनाश्रयम् स्वाधेयाधाराभावान्निराधेयम्॥नामरूपसम्बन्धाभावादनामकमरूपकम् अविद्यातत्कार्याभावात्सदामुक्तं शुद्धं बुद्धं ब्रह्मेत्यर्थः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

सङ्कल्पाभावान्मनोपि नाशमेति तत्कार्यसंसारमोहनीहारोपि विलीयते ॥ शरद्यागतायां तथा खं स्वच्छं विभाति तथान्तर्हृदये

स्वच्छं विभाति शरदीव खमागतार्या चिन्मात्रमेकमजमाद्यमनन्त-मन्तः ॥ ३६ ॥

श्रीं तत्सदिति साद्धान्तिकनपुंसकलिङ्गस्वरूपमहावाक्यानि महावाक्यरत्नावल्यां चतुर्दशप्रकरणे एकोनचत्वारिंशत् ॥

---

निर्विशेषतयाद्यं चिन्मात्रमेकम् अजम् अनन्तम् स्वच्छं विभातीत्यर्थः ॥ ३८ ॥ ३६ ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायाम्महावाक्यरत्नावलिटीकायात्प्रभाभिधानायान्नपुंसकलिङ्गवाक्यविवरणं सम्पूर्णम् ॥ आहत्यवाक्यानि द्वशीत्यधिकषट्शतम् ॥ ६८२ ॥

# अथ सार्द्धान्तिकात्मस्वरूपमहावाक्यानि ।

आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा ॥ १ ॥

इदं सर्वं यदयमात्मा ॥ २ ॥

चिदेकरसो ह्ययमात्मा ॥ ३ ॥

अतो ह्ययमात्मा ॥ ४ ॥

अनुज्ञाता ह्ययमात्मा ॥ ५ ॥

अनुज्ञैकरसो ह्ययमात्मा ॥ ६ ॥

अविकल्पो ह्ययमात्मा ॥ ७ ॥

देहादेः परतरत्वाद्ब्रह्मैव परमात्मा ॥ ८ ॥

अखण्डैकरसो ह्ययमात्मा ॥ ९ ॥

निर्गुणः साक्षीभूतो निष्क्रियो निरवयवात्मा ॥ १० ॥

---

अथ सार्द्धान्तिकात्मस्वरूपमहावाक्यानि लिख्यन्ते आकाश इत्यादिना–आसमन्तात् काशते इत्याकाशः नामेतिप्रसिद्धो जगद्बीजभूतनामरूपयोर्निर्वहिता तदाधारः ते नामरूपे यदन्तरा रज्जुसर्पवद्विकल्पिते तद्ब्रह्म तस्यैव मुक्तिरूपत्वात्तदेवामृतम् स एवात्मेत्यर्थः ॥ १ ॥

यत् यस्मात् इदं दृश्यमानं सर्वं जगत् भवति सोऽयमात्मा ॥ यस्तु-तस्तु अयमात्मा चैतन्यादविकारित्वाच्चिदेकरसः ॥ अतः सर्वाधारत्वाच्चिदेकरसत्वात् अयमात्मा व्यापकः ॥ अयमात्मा ईश्वररूपेण नियन्तृत्वेन जीवात्मनामनुशासिता ॥ अयमात्मा अनुज्ञामनुशासनं कुर्वन् चिद्यते अत अनुज्ञैकरसः ॥ अयमात्मा कल्पनाराहित्यादविकल्पः ॥ २ ॥
॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

देहादेः पिण्डब्रह्माण्डयोः परतरत्वात् अत्यन्तपरत्वात् ब्रह्मैव परमात्मा ॥ अयमात्मा अखण्डैकरसः अखण्डाकारवृत्तिमात्रगम्यः ॥ निर्गुणः गुणत्रयरहितः सर्वसाक्षीभूतः निष्क्रियो व्योमवन्निरवयवा-

विरजः पर आकाशादज आत्मा महान्ध्रुवः ॥ ११ ॥
एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ॥ १२ ॥
निःशब्दं परमं ब्रह्म परमात्मा समीर्यते ॥ १३ ॥
सकले निष्कले भावे सर्वत्रात्माव्यवस्थितः ॥ १४ ॥
सर्वदा सर्वकृत्सर्वः परमात्मेत्युदाहृतः ॥ १५ ॥
अनाद्यन्तावभासात्मा परमात्मेहविद्यते ॥ १६ ॥
नित्यः सर्वगतोह्यात्मा कूटस्थो दोषवर्जितः ॥ १७ ॥
तत्परः परमात्मा च श्रीरामः पुरुषोत्तमः ॥ १८ ॥
सर्वकारणकार्यात्मा कार्यकारणवर्जितः ॥ १९ ॥

---

त्मा ॥ रजआदिगुणत्रयाभावाद्विरजाः स्वच्छः आकाशादपि परः अजः महानपरिच्छिन्नः ध्रुवो नित्यः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

अद्वैतत्वादेकः दीप्यमानत्वाद्देवः सर्वभूतेष्वव्यक्तरूपेण जीवत्वेन स्थितः व्यापकत्वेन सर्वव्यापी सर्वान्तर्यामित्वेन सर्वभूतान्तरात्मा ॥ १२ ॥

शब्दगुणकाकाशविलक्षणत्वात् निःशब्दं परमं ब्रह्मैव परमात्मोच्यते ॥ १३ ॥

सावयवे निरवयवे च भावे पदार्थे सर्वत्रात्मा स्थितः आत्मान्तरवस्तुनो पारमार्थिकत्वात् ॥ १४ ॥

यः अज्ञदृष्ट्या सदा सर्वकार्यकृत् स ज्ञानदृष्ट्या सर्वः परमात्मेति कथितः ॥ १५ ॥

इह संसारदशायामपि आदिमध्यान्तशून्यतया प्रकाशस्वरूपः परमात्मा विद्यते ॥ १६ ॥

आत्मा नित्यः सर्वगतः कूटस्थः अन्यवृत्तिदोषालिप्तः निरवयवत्वान्निर्गुणत्वाच्चेति भावः ॥ १७ ॥

यो लोके श्रीरामः पुरुषोत्तमः कथ्यते स तत्परः तत्पदलक्ष्यः परः तुरीयः परमात्मा ब्रह्म ॥ १८ ॥

अज्ञदृष्ट्या कार्यकारणवज्ञासमानोपि ज्ञानिदृष्ट्या कार्यकारण-

सर्वातीतस्वभावात्मा नादान्तर्ज्योतिरेव सः ॥ २० ॥
निर्विकल्पस्वरूपात्मा सविकल्पविवर्जितः ॥ २१ ॥
सदा समाधिशून्यात्मा आदिमध्यान्तवर्जितः ॥ २२ ॥
प्रज्ञानवाक्यहीनात्मा अहं ब्रह्मास्मि वर्जितः ॥ २३ ॥
तत्त्वमस्यादिहीनात्मा अयमात्मेत्यभावकः ॥ २४ ॥
ओङ्कारवाच्य हीनात्मा सर्ववाच्यविवर्जितः ॥ २५ ॥
सर्वत्र पूर्णरूपात्मा सर्वत्रात्माऽविशेषकः ॥ २६ ॥
शुद्धचैतन्यरूपात्मा सर्वसिद्धिविवर्जितः ॥ २७ ॥
आनन्दात्मा प्रियो ह्यात्मा मोक्षात्मा बन्धवर्जितः ॥ २८ ॥
शून्यात्मा सूक्ष्मरूपात्मा विश्वात्मा विश्वहीनकः ॥ २९ ॥
सत्तामात्रस्वरूपात्मा नान्यत्किञ्चिज्जगद्भयम् ॥ ३० ॥

वर्जितः सर्वातिक्रमणकर्तृत्वस्वभावरूपः नादः प्रणवनादस्तदन्तर्ज्योती-रूपः परमात्मा ॥ १९ ॥ २० ॥

सविकल्पसमाध्यगम्यस्वरूपः अत एव निर्विकल्पसमाधिगम्य-स्वरूपात्मा ॥ २१ ॥

अयमात्मा आदिमध्यान्तवर्जितः सदा समाधिरहितस्वरूपः॥२२॥

प्रज्ञानेत्यादिना अयमात्मेत्यवमासक्षेत्यन्तेन वाक्यद्वयेनात्मनः ऋग्वेदगतप्रज्ञानं ब्रह्म यजुर्वेदगताहं ब्रह्मास्मि सामवेदगततत्त्वम-स्यथर्वणवेदगतायमात्मा ब्रह्मेति महावाक्यचतुष्टयागम्यरूपत्वमा-वेद्यते ॥ २३ ॥ २४ ॥

सर्ववाच्यो घटपटादिस्तद्वर्जितः ओङ्कारवाच्यो विश्वविराडा-दिस्तद्रहितस्वरूपः ॥ २५ ॥

प्रपञ्चाभावात् सर्वत्र पूर्णरूपः स्वातिरिक्तेषु सत्स्वपि स्वयमेवा-वशेषणात् सर्वत्रात्मावशेषकः ॥ शुद्धचैतन्यरूपः मन्त्रसिद्ध्यादिसिद्धि-रूपहीनः ॥ दुःखसामान्याभावादानन्दात्मा सर्वस्मात्प्रेयोरूपादात्मैव प्रियः बन्धवर्जनान्मोक्षात्मा ॥ प्रपञ्चशून्यात्मा कारणात्मना सूक्ष्मात्मा कार्यात्मना विश्वात्मा वस्तुतो विश्वहीनकः विश्वस्मात्सर्वस्माद्धीनः स्वातिरिक्तप्रपञ्चसत्ताप्रदानात्सत्तामात्रस्वरूपात्मा भीहेतुद्वैताभावा-न्नान्यत्किञ्चिज्जगद्भयम् स्वस्यैव निर्भयत्वात् ॥ २६ । २७।२८। २९।३० ॥

अपरिच्छिन्नरूपात्मा अणुस्थूलादिवर्जितः ॥ ३१ ॥
नामरूपविहीनात्मा परसम्वित्सुखात्मकः ॥ ३२ ॥
साद्यसादित्वहीनात्मा किञ्चित्किञ्चिन्न किञ्चन ॥ ३३ ॥
मुक्तामुक्तस्वरूपात्मा मुक्तामुक्तविवर्जितः ॥ ३४ ॥
द्वैताद्वैतस्वरूपात्मा द्वैताद्वैतादिवर्जितः ॥ ३५ ॥
निष्कलात्मा निर्मलात्मा बुद्धात्मा पुरुषात्मकः ॥ ३६ ॥
आत्मेतिशब्दहीनो य आत्मशब्दार्थवर्जितः ॥ ३७ ॥
सच्चिदानन्दहीनो य एषैवात्मा सनातनः ॥ ३८ ॥
यस्य किञ्चिद्बहिर्नास्ति किञ्चिदन्तः कियन्न च ॥ ३९ ॥
यस्य लिङ्गं प्रपञ्चम्वा ब्रह्मैवात्मा न संशयः ॥ ४० ॥
ओं तत्सदिति साद्धान्तिकात्मस्वरूपमहावाक्यानि महावाक्य-रत्नावल्यां पञ्चदशप्रकरणे चत्वारिंशत् ॥

---

अणुस्थूलादिपरिमाणाभावादपरिच्छिन्नरूपात्मा ॥ सच्चिदानन्द-त्वान्नामरूपविहीनात्मा परसम्विद्रूपः सुखरूपः ॥ निष्प्रतियोगिकत्वा-त्साद्यसादित्वहीनात्मा अतिरिक्तं न किञ्चिदस्त्येतद्रूप एव न अयं नामरूपादिनिषेधदार्ढ्याय ॥ ३१ ॥ ३२ ॥ ३३ ॥

अज्ञानिज्ञानिदृष्ट्या मुक्तामुक्तवत् द्वैताद्वैतवत् स्थितोऽपि परमार्थ-दृष्ट्या मुक्तामुक्तद्वैताद्वैतरहितः ॥ निर्विशेषपुराणपुरुषत्वात् अपि च स पुरुषः निष्कलः निर्मलः बोधरूपो भवति ॥ ३४ ॥ ३५ ॥ ३६ ॥

यः आत्मेति सच्चिदानन्द इति शब्दार्थवर्जितो भवति स एव निष्प्रतियोगिकः परमात्मा ॥ ३७ ॥ ३८ ॥

यस्य बहिः किञ्चिन्नास्ति कियत् किं प्रमाणमन्तः किञ्चिच्च न च अन्तः प्रमाणमपिनास्तीत्यर्थः ॥ यस्य लिङ्गं प्रपञ्चमाहुः चेत्यवधारणे स आत्मा ब्रह्मैवेत्यत्र न संशयः ॥ ३९ ॥ ४० ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायाम्महावाक्यरत्नावलि-टीकायां प्रभाभिधानायामात्मस्वरूपवाक्यविवरणं सम्पूर्णम् ॥ आहत्य-वाक्यानि द्वाविंशत्यधिकसप्तशतम् ॥ ७२२ ॥

# अथ सर्वस्वरूपवाक्यानि ॥

ओङ्कार एवेदं सर्वम् ॥ १ ॥
स एवाधस्तात्स उपरिष्टात्स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदं सर्वम् ॥ २ ॥
अहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतः अहमुत्तरतः अहमेवेदं सर्वम् ॥ ३ ॥
आत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वम् ॥ ४ ॥
आत्मैवेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ५ ॥
एतद्ब्रह्मैव तत्सर्वम् ॥ ६ ॥
नारायण एवेदं सर्वम् ॥ ७ ॥
सच्चिदानन्दरूपमिदं सर्वम् ॥ ८ ॥

---

अथ सर्वस्वरूपवाक्यानि लिख्यन्ते ओमित्यादिना । इदं सर्वं जगत् ओङ्कार एव ब्रह्मैवेत्यर्थः ॥ १ ॥

स एवाधस्तादित्यत्र तच्छब्देन तत्पदलक्ष्यमुच्यते 'स ब्रह्मेति" श्रुतेः अहमेवाधस्तादित्यत्राहं शब्देन त्वं पदलक्ष्यमभिधीयते " बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ' इति श्रुतेः सोहं शब्दाभ्यां प्रत्यगभिन्नं ब्रह्मोच्यते । आत्मैवाधस्तादित्यत्रात्मशब्देन केवलं ब्रह्मोच्यते अनयोरूर्ध्वाधः प्रागादिदिक्षु प्रसक्तभेदस्य मायिकत्वेन सर्वं ब्रह्मैवेत्यर्थः ॥ २ ॥ ३ ॥ ४ ॥

इदं पिण्डाण्डं शरीरं सर्वमात्मैव पिण्डाण्डस्य विकल्पितत्वात् इदं ब्रह्माज्ञानविकल्पितब्रह्माण्डं सर्वं ब्रह्मैव ॥ पिण्डाण्डब्रह्माण्डगत हेयांशापाये इदमेतदुभयं परामृतं ब्रह्ममात्रमित्यर्थः तत्सर्वं जगत् ब्रह्मैवेत्यर्थः ॥ सर्वमिदं नारायण एव नरादाविर्भूतं नारं जगत् अथवा 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः " इति मानवधर्मशास्त्रोक्तेर्नारा आपः तदारोपापवादाधारो नारायणः ॥ इदं सर्वं जगत्

यच्चं यावच्च दूरस्थं सर्वं चिन्मात्रमेव हि ॥ २१ ॥
चिन्मात्रान्नास्ति लक्ष्यञ्च सर्वञ्चिन्मात्रमेव हि ॥ २२ ॥
आत्मनोऽन्या गतिर्नास्ति सर्वमात्ममयञ्जगत् ॥ २३ ॥
आत्मनोऽन्यत्तुषं नास्ति सर्वमात्ममयञ्जगत् ॥ २४ ॥
सर्वमात्मैव शुद्धात्मा सर्वं चिन्मात्रमद्वयम् ॥ २५ ॥
सर्वञ्च खल्विदं ब्रह्म नित्यचिद्घनमक्षतम् ॥ २६ ॥
समस्तं खल्विदं ब्रह्म सर्वमात्मेदमाततम् ॥ २७ ॥
न त्वं नाहं न चान्यं वा सर्वं ब्रह्मैव केवलम् ॥ २८ ॥
न तदस्ति न यत्राहं न तदस्ति न तन्मयम् ॥ २९ ॥
किमन्यदभिवाञ्छामि सर्वं सच्चिन्मयं ततम् ॥ ३० ॥
भ्रान्तिरभ्रान्तिर्नास्त्येव सर्वं ब्रह्मैव केवलम् ॥ ३१ ॥

---

यत् यावत् यत्परिमाणं दूरस्थं च शब्दात्समीपस्थं सर्वं चिद्रूपमेव ॥ २१ ॥

चिद्रूपादन्यत् लक्ष्यं नास्ति यतः सर्वं चिद्रूपमेव ॥ २२ ॥

आत्मनोऽन्यच्छरणं नास्ति यतः सर्वं जगत् आत्मरूपम् ॥ २३ ॥

आत्मनोऽन्यत्तुषम् आत्मभिन्नाधान्यत्वगपि नास्ति " धान्यत्वचि तुषः पुमान्" इत्यमरः तुषमिति प्रयोगस्त्वार्षः यतः सर्वं जगत् आत्ममयम् ॥ २४ ॥

सर्वं जगत् आत्मैव शुद्धात्मा सर्वं जगत् अद्वयम चिद्रूपम् ॥२५॥

सर्वं दृश्यमानं जगत् ब्रह्म तच्च नित्यं चिद्घनम् अक्षतम् ॥ २६ ॥

समस्तं दृश्यं ब्रह्म सर्वं विस्तृतमिदं दृश्यम् आत्मेत्यर्थः ॥ २७ ॥

न त्वं नाहं चान्यद्वा न सर्वं वस्तुजातं केवलं ब्रह्मैवेत्यर्थः ॥ २८ ॥

तद्वस्तु नास्ति यत्राहमिति व्यवहारो न तद्वस्तु नास्ति यत्र तत्पदलक्ष्यव्यवहारो न भवति ब्रह्मभिन्नस्यालीकत्वात् ॥ २९ ॥

अन्यत् किमभिवाञ्छामि न किमपीत्यर्थः यतः सर्वं विस्तृतंजगत् सच्चिद्रूपमित्यर्थः ॥ ३० ॥

भ्रमाभ्रमौ नस्तः सर्वं भ्रमादि केवलं ब्रह्मैव ॥ ३१ ॥

न देहो न च कर्म्माणि सर्वं ब्रह्मैव केवलम् ॥ ३२ ॥
लक्षणात्रयविज्ञानं सर्वं ब्रह्मैव केवलम् ॥ ३३ ॥
जगन्नाम्ना चिदाभाति सर्वं ब्रह्मैव केवलम् ॥ ३४ ॥
ब्रह्ममात्रमिदं सर्वं ब्रह्म मात्रमसन्न हि ॥ ३५ ॥
ब्रह्ममात्रं व्रतं सर्वं ब्रह्ममात्रं रसं सुखम् ॥ ३६ ॥
ब्रह्ममात्रं श्रुतं सर्वं स्वयं ब्रह्मैव केवलम् ॥ ३७ ॥
ब्रह्मैव सर्वं चिन्मात्रं ब्रह्ममात्रं जगत्त्रयम् ॥ ३८ ॥
सर्वं प्रशान्तमजमेकमनादिमध्यमाभास्वरं स्वदनमात्रमचैत्य चिह्नम् ॥ ३९ ॥

---

न देहो न च कर्माणि सन्ति सर्वं देहादि केवलं ब्रह्मैवेत्यर्थः ॥ ३२ ॥

अहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणा इति त्रिविधस्वरूपं सर्वं विज्ञानं केवलं ब्रह्मैव ॥ ३३ ॥

चित्प्रकाशस्य नाम जगत् अतः सर्वं केवलं ब्रह्मैवेत्यर्थः ॥ ३४ ॥

इदं सर्वं जगत् ब्रह्ममात्रम् आवृत्तिब्रह्मरूपत्वदार्ढ्याय असन्न-हि असतः सत्त्वं नास्तीत्यर्थः । अथवा जगतः ब्रह्मरूपत्वं मिथ्या नेत्यर्थः ॥ ३५ ॥

सर्वं व्रतं ब्रह्ममात्रम् रसः मधुरादिः ब्रह्ममात्रं नपुंसकत्वं छान्द-सम् सुखं रसजन्यसुखं ब्रह्ममात्रम् ॥ ३६ ॥

सर्वं श्रुतं शास्त्रं ब्रह्ममात्रम् केवलं स्वयं ब्रह्मैव ब्रह्मणः वारद्वयं प्रतिपादनं बोधदार्ढ्याय ॥ ३७ ॥

सर्वं जगत् चिन्मात्रं ब्रह्मैवेत्यर्थः जगत्त्रयं ब्रह्मस्वरूपमेवे-त्यर्थः ॥ ३८ ॥

सर्वं प्रशान्तं कल्पितवस्तुमात्रशान्त्यधिकरणम् अजम् एकम् आदिमध्यान्तशून्यम् आभास्वरम् देदीप्यमानम् स्वाद्यस्वादकसम्ब-न्धराहित्यात् स्वदनरूपम् ज्ञानविशेषरूपमित्यर्थः विषयलिङ्ग-रहितम् ॥ ३९ ॥

सर्वं प्रशान्तमिति शब्दमयी च दृष्टिर्बोधार्थमेव हि मुधैव तदोमितीदम् ॥ ४० ॥

ॐ तत्सदिति साद्धान्तिकसर्वस्वरूपवाक्यानि महावाक्यरत्नावल्यां षोडशप्रकरणे चत्वारिंशत् ॥

---

निर्विशेषब्रह्मप्रबोधार्थं सर्वं प्रशान्तमित्यादि शब्दमयी दृष्टिः शाब्दज्ञानं चकारात् अन्यानि साधनानि गृह्यन्ते मुधैव व्यर्थमेव यद्यद्विकल्पितं तदिदमोङ्कारः ब्रह्मैवेत्यर्थः निर्विशेषब्रह्मणोऽशब्दत्वात् "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इत्यादिश्रुतेः ॥ ४० ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायाम्महावाक्यरत्नावलिटीकायाम्प्रभाभिधानायां सर्वस्वरूपवाक्यविवरणं सम्पूर्णम् । आहत्य वाक्यानि द्विषष्ठ्युत्तरसप्तशतम् ॥ ७६२ ॥

# अथ सार्द्धान्तिकब्रह्मस्वरूपवाक्यानि ।

सर्वं ह्येतद् ब्रह्म ॥ १ ॥
अयमात्मा ब्रह्म ॥ २ ॥
सत्यं ज्ञानमनन्तं ब्रह्म ॥ ३ ॥
प्रज्ञामतिष्ठाप्रज्ञानं ब्रह्म ॥ ४ ॥
तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः ॥५॥
विज्ञानमानन्दं ब्रह्म ॥ ६ ॥
अजरोऽमरोऽमृतोऽभयोब्रह्माभयं वै ब्रह्म ॥ ७ ॥
सर्वभूतस्थमेकं नारायणं कारणं पुरुषमकारणं परं ब्रह्मोम् ॥ ८ ॥
स्वयं प्रकाशः स्वयं ब्रह्म ॥ ९ ॥
तदेतदद्वयं स्वयं प्रकाशमहानन्दमात्मैवैतदभयममृतमेतद्ब्रह्म॥१०॥

---

अथ सार्द्धान्तिकब्रह्मस्वरूपवाक्यानि लिख्यन्ते सर्वमित्यादिना ॥ एतत्दृश्यमानं सर्वं ब्रह्म ॥ अयमात्मा जीवो ब्रह्म ॥ सत्यं कालत्रयाबाध्यम् ज्ञानं ज्ञप्तिमात्रतया स्थितं परिच्छेदत्रयाभावादनन्तम् ब्रह्म ॥ प्रज्ञाप्रतिष्ठाप्रज्ञानं प्रज्ञास्वरूपं प्रतिष्ठास्वरूपं प्रज्ञानस्वरूपं ब्रह्म ॥ तदेतच्छ्रुद्ध्याच्यतत्त्वंपदलक्ष्यं ब्रह्म स्वकारणाभावादपूर्वम् स्वकार्याभावादनपरम् अनन्तरमबाह्यम् सर्वैर्ब्रह्मविद्भिरयमात्मा ब्रह्मेत्यनुभूतत्त्वात्सर्वानुभूः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

विज्ञप्तिमात्रमखण्डानन्दम् ब्रह्म ॥ अयं जीवः वस्तुतःअशनायादिषडूर्म्यभावादजरः नित्यत्वादमरः कैवल्यरूपत्वादमृतः अद्वैतत्वादभयः ब्रह्म ब्रह्मरूपः यतः अभयंवै ब्रह्म ॥ सर्वभूतेषु स्थितम् एकं नारायणरूपेण कारणपुरुषात्मकम् वस्तुतस्त्वकारणम् परम् ओङ्कारार्थभूतं ब्रह्मेत्यर्थः ॥ प्रकाशकान्तरनैरपेक्ष्येण स्वयमेव प्रकाशत इति स्वयं प्रकाशः स्वयं ब्रह्म ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

तदेतद्ब्रह्म अद्वयम् अद्वितीयम् स्वयं प्रकाशस्वरूपम् महानन्दस्वरूपम् अभयम् अमृतम् आत्मस्वरूपमित्यर्थः ॥ १० ॥

सर्वं प्रशान्तमिति शब्दमयी च दृष्टिर्बोधार्थमेव हि मुधैव तदोमितीदम् ॥ ४० ॥

ओं तत्सदिति साद्धान्तिकसर्वस्वरूपवाक्यानि महावाक्यरत्नावल्यां षोडशप्रकरणे चत्वारिंशत् ॥

---

निर्विशेषब्रह्मप्रबोधार्थं सर्वं प्रशान्तमित्यादि शब्दमयी दृष्टिः शाब्दज्ञानं चकारात् अन्यानि साधनानि गृह्यन्ते मुधैव व्यर्थमेव यद्यद्विकल्पितं तदिदमोङ्कारः ब्रह्मैवेत्यर्थः निर्विशेषब्रह्मणोऽशब्दत्वात् "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इत्यादिश्रुतेः ॥ ४० ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायाम्महावाक्यरत्नावलिटीकायाम्प्रभाभिधानायां सर्वस्वरूपवाक्यविवरणं सम्पूर्णम् । आहत्यवाक्यानि द्विषष्ठ्युत्तरसप्तशतम् ॥ ७६२ ॥

सगुणनिर्गुणस्वरूपं ब्रह्म ॥ २२ ॥

आदिमध्यान्तशून्यं ब्रह्म ॥ २३ ॥

मायातीतगुणातीतं ब्रह्म ॥ २४ ॥

अनन्तमप्रमेयाखण्डपरिपूर्णं ब्रह्म ॥ २५ ॥

अद्वितीयपरमानन्दनित्यशुद्धबुद्धमुक्तसत्यस्वरूपव्यापकाभिन्नापरिच्छिन्नं ब्रह्म ॥ २६ ॥

सच्चिदानन्दस्वप्रकाशं ब्रह्म ॥ २७ ॥

मनोवाचामगोचरं ब्रह्म ॥ २८ ॥

देशतः कालतो वस्तुतः परिच्छेदरहितं ब्रह्म ॥ २९ ॥

अखिलप्रमाणागोचरं ब्रह्म ॥ ३० ॥

तुरीयं निराकारमेकं ब्रह्म ॥ ३१ ॥

अद्वैतमनिर्वाच्यं ब्रह्म ॥ ३२ ॥

शिवं प्रशान्तममृतं परञ्च ब्रह्म ॥ ३३ ॥

---

एत्वं निर्गुणत्वञ्चोच्यते ॥ आदिमध्यान्तशून्यम ब्रह्म ॥ मायातत्कार्यसत्त्वे तदतीतम् गुणत्रयातीतम् ब्रह्म ॥ अनन्तम् अप्रमेयम् अखण्डम् परिपूर्णम् ब्रह्म ॥ अद्वितीयम् परमानन्दम् नित्यस्वरूपम् शुद्धस्वरूपम् बुद्धस्वरूपम् मुक्तस्वरूपम् सत्यस्वरूपम् व्यापकम अभिन्नम् प्रत्यगभिन्नम् अपरिच्छिन्नम् अपरिमितम् ब्रह्म ॥ सद्रूपम् चिद्रूपम् आनन्दरूपम् स्वप्रकाशरूपम् ब्रह्म ॥ "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इतिश्रुतेर्मनोवाचामगोचरम् देशकालवस्तुरूपपरिच्छेदकापरिच्छेद्यम् ब्रह्म ॥ अतनिरसनमुद्रया वेदान्तगोचरत्वात् प्रत्यक्षाद्यखिलप्रमाणागोचरम् ब्रह्म ॥ २१–२२–२३–२४–२५–२६–२७–२८–२९–३० ॥

अवस्थात्रयातीतत्वात्तुरीयम् निरुपाधिकत्वान्निराकारम् एकम् ब्रह्म अद्वैतम् अनिर्वाच्यम् ब्रह्म ॥ शिव प्रशान्तम् अमृतम् परञ्च ब्रह्म सर्वमेतद्ब्रह्मस्वरूपमित्यर्थः ॥ यत् एकम् अक्षरम् निष्क्रिय शिवं सन्मात्र

सदेव पुरस्तात् सिद्धं ब्रह्म ॥ ११ ॥
आकाशवत्सूक्ष्मं केवलसत्तामात्रस्वभावं परं ब्रह्म ॥ १२ ॥
अद्वितीयमखिलोपाधिविनिर्मुक्तं तत्सकलशक्त्युपबृंहितमनाद्यनन्तं नित्यं शिवं शान्तं निर्गुणमित्यादिवाच्यमनिर्वाच्यं चैतन्यं ब्रह्म ॥ १३ ॥
एकमेवाद्वितीयं ब्रह्म ॥ १४ ॥
सर्वदानवच्छिन्नं परं ब्रह्म ॥ १५ ॥
सच्चिदानन्दतेजः कूटस्थरूपं तारकं ब्रह्म ॥ १६ ॥
तन्नित्यमुक्तमविक्रियं सत्यज्ञानानन्तानन्दपरिपूर्णं सनातनमेकमेवाद्वितीयं ब्रह्म ॥ १७ ॥
चित्स्वरूपं निरञ्जनं परं ब्रह्म ॥ १८ ॥
तत्त्वंपदलक्ष्यं प्रत्यगभिन्नं ब्रह्म ॥ १९ ॥
अखण्डार्थं परं ब्रह्म ॥ २० ॥
सर्वकालाबाधितं ब्रह्म ॥ २१ ॥

---

पुरस्तात् सृष्टेः पूर्वमपि सदेवसिद्धं त्रैकालिकम् ब्रह्म ॥ आकाशवत्सूक्ष्मम् शुद्धसत्तामात्रस्वरूपम् परं ब्रह्म ॥ अद्वितीयम् अखिलोपाधिसत्त्वे तद्विनिर्मुक्तम् तद्ब्रह्मसकलशक्त्युपबृंहितम् सर्वशक्तिकलितम् आद्यन्तरहितम् नित्यं शिवं शान्तं निर्गुणमित्यादि वाक्यानां वाच्यं वस्तुतो निर्वाच्यम् चैतन्यस्वरूपं ब्रह्म ॥ एकमेवाद्वितीयं ब्रह्म ॥ सर्वदापरिच्छेदातीतत्वादनवच्छिन्नं परं ब्रह्म ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

योगिभिर्भ्रूमध्ये यत्तारकमितिलक्ष्यते तदेवसच्चिदानन्दतेजः कूटस्थरूपम् ब्रह्म ॥ तन्नित्यमुक्तम् अविक्रियम् सत्यज्ञानानन्तानन्दपरिपूर्णम् सनातनम् एकमेवाद्वितीयम् ब्रह्म ॥ चित्स्वरूपम् निरञ्जनम् निर्माय परं ब्रह्म ॥ तत्त्वंपदलक्ष्यैक्यसिद्धं प्रत्यगभिन्नं ब्रह्म ॥ खण्डार्थामाया तत्कार्याणि तद्रहितम् परं ब्रह्म ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

ब्रह्म कालत्रयाबाधितस्वरूपम् स्वाक्षस्यक्षदृष्टिस्यां ब्रह्मणः सगु·

सगुणनिर्गुणस्वरूपं ब्रह्म ॥ २२ ॥

आदिमध्यान्तशून्यं ब्रह्म ॥ २३ ॥

मायातीतगुणातीतं ब्रह्म ॥ २४ ॥

अनन्तमप्रमेयाखण्डपरिपूर्णं ब्रह्म ॥ २५ ॥

अद्वितीयपरमानन्दनित्यशुद्धबुद्धमुक्तसत्यस्वरूपव्यापकाभिन्नापरिच्छिन्नं ब्रह्म ॥ २६ ॥

सच्चिदानन्दस्वप्रकाशं ब्रह्म ॥ २७ ॥

मनोवाचामगोचरं ब्रह्म ॥ २८ ॥

देशतः कालतो वस्तुतः परिच्छेदरहितं ब्रह्म ॥ २९ ॥

अखिलप्रमाणागोचरं ब्रह्म ॥ ३० ॥

तुरीयं निराकारमेकं ब्रह्म ॥ ३१ ॥

अद्वैतमनिर्वाच्यं ब्रह्म ॥ ३२ ॥

शिवं प्रशान्तममृतं परञ्च ब्रह्म ॥ ३३ ॥

---

एवं निर्गुणत्वञ्चोच्यते ॥ आदिमध्यान्तशून्यम् ब्रह्म॥ मायातत्कार्यसत्त्वे तदतीतम् गुणत्रयातीतम् ब्रह्म ॥ अनन्तम् अप्रमेयम् अखण्डम् परिपूर्णम् ब्रह्म ॥ अद्वितीयम् परमानन्दम् नित्यस्वरूपम् शुद्धस्वरूपम् बुद्धस्वरूपम् मुक्तस्वरूपम् सत्यस्वरूपम् व्यापकम् अभिन्नम् प्रत्यगभिन्नम् अपरिच्छिन्नम् अपरिमितम् ब्रह्म॥ सद्रूपम् चिद्रूपम् आनन्दरूपम् स्वप्रकाशरूपम् ब्रह्म ॥ "यतो वाचो निवर्त्तन्ते अप्राप्य मनसासह" इतिश्रुतेर्मनोवाचामगोचरम् देशकालवस्तुरूपपरिच्छेदकापरिच्छेद्यम् ब्रह्म ॥ अतन्निरसनमुद्रया वेदान्तगोचरत्वात् प्रत्यक्षाद्यखिलप्रमाणागोचरम् ब्रह्म ॥ २१-२२-२३-२४-२५-२६-२७-२८-२९-३० ॥

अवस्थात्रयातीतत्वात्तुरीयम् निरुपाधिकत्वान्निराकारम् एकम् ब्रह्म अद्वैतम् अनिर्वाच्यम् ब्रह्म॥ शिवं प्रशान्तम् अमृतम् परञ्च ब्रह्म सर्वमेतद्ब्रह्मस्वरूपमित्यर्थः ॥ यत् एकम् अक्षरम् निष्क्रियं शिवं सन्मात्रं

यदेकमक्षरं निष्क्रियं शिवं सन्मात्रं ब्रह्म ॥ ३४ ॥
असावादित्यो ब्रह्म ॥ ३५ ॥
ओमित्येतदक्षरं परं ब्रह्म ॥ ३६ ॥
ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्मपश्चाद्ब्रह्मदक्षिणतश्चोत्तरेण ॥ ३७ ॥
अधश्चोर्ध्वं प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ ३८ ॥
तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ॥ ३९ ॥
चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि ॥ ४० ॥
ब्रह्मशब्देन तद्ब्रह्मस्वप्रकाशात्मरूपकम् ॥ ४१ ॥
एतद्भावविनिर्मुक्तं तद्ब्रह्म ब्रह्मतत्परम् ॥ ४२ ॥
चिन्मात्रात्परमं ब्रह्म चिन्मात्रान्नास्ति कोऽपि हि ॥ ४३ ॥
अखण्डैकरसं ब्रह्म चिन्मात्रान्न हि विद्यते ॥ ४४ ॥
सदोदितं परं ब्रह्म ज्योतिषामुदयो यतः ॥ ४५ ॥
तस्मिन्प्रलीयते शब्दस्तत्परं ब्रह्म गीयते ॥ ४६ ॥

---

तत्सर्वं ब्रह्मस्वरूपम् ॥ आदित्याद्यवभासकत्वादसौ चिदादित्यो ब्रह्मैवेत्यर्थः ॥ ओमित्येतदक्षरं परं ब्रह्म ॥ इदं दृश्यम् अमृतं ब्रह्मैव स्यादृष्टिविकल्पितासु पुरस्तात् पश्चात् दक्षिणतश्चोत्तरतः अधश्चोर्ध्वं चशब्दादाग्नेयादिविदिशो गृह्यन्ते तदन्तरालञ्च एवं दिक्षु विदिक्षु च प्रसृतं विस्तृतं इदं विश्वं वरिष्ठम् श्रेष्ठम् ब्रह्म ॥ तदेव ब्रह्म निष्कलं निरवयवम् विकल्पाविषयम् निरञ्जनम् निर्मायम् ॥ चैतन्यम् एकम् ब्रह्म अतः प्रज्ञानस्वरूपम् ब्रह्म मय्यपि विद्यते ॥३१-३२-३३-३४-३५-३६-३७-३८-३९-४० ॥

यत् स्वयं प्रकाशतया वर्णितं तदेव ब्रह्मशब्देनेरितम् ॥ एतद्दृश्यभावभावरहितं यत् किमपि ब्रह्म तत्परं ब्रह्म ॥ चिन्मात्रात् स्वात्मस्वज्ञानात् विलक्षणम् परम उत्कृष्टं ब्रह्म चिन्मात्रान्निर्विशेषब्रह्मणोऽन्यः कोऽपि व्यावहारिको नास्ति ॥ अखण्डैकरसं ब्रह्म चिद्रूपादतिरिक्तं न विद्यते ॥ यतः सूर्यादिज्योतिषामुदयो भवति तत्सदोदितम् परं ब्रह्म ॥ ब्रह्म यत् सर्वशब्दलयाधिकरणं तत्परं ब्रह्म गीयते ॥ यत् घटादि सर्व-

सर्वशक्तिपरं ब्रह्म नित्यमापूर्णमद्वयम् ॥ ४७ ॥
सत्ता सर्वपदार्थानां गम्यं ब्रह्माभिधं पदम् ॥ ४८ ॥
परं ब्रह्म परं तत्त्वं सच्चिदानन्दलक्षणम् ॥ ४९ ॥
अक्षरं परमं ब्रह्म निर्विशेषं निरञ्जनम् ॥ ५० ॥
ब्रह्मैवैकमनाद्यन्तमब्धिवत्प्रविजृम्भते ॥ ५१ ॥
न किञ्चिद्भावनाकारं यत्तद्ब्रह्म परं विदुः ॥ ५२ ॥
एकमेवाद्वयं ब्रह्म नेह नानास्ति किञ्चन ॥ ५३ ॥
ब्रह्मैव विद्यते साक्षाद्वस्तुतो वस्तुतोऽपि च ॥ ५४ ॥
तद्विद्याविषयं ब्रह्म सत्यज्ञानसुखाद्वयम् ॥ ५५ ॥
शान्तश्च तदतीतश्च परं ब्रह्म तदुच्यते ॥ ५६ ॥
अनुभूतिपरं तस्मात् सारं ब्रह्मेति कथ्यते ॥ ५७ ॥
यदिदं ब्रह्म पुच्छाख्यं सत्यज्ञानाद्वयात्मकम् ॥ ५८ ॥

---

पदार्थजलाहरणादिशक्तिजनकं तदेव सदापूर्णम् नित्यमद्वयम् ॥ ब्रह्म घटादिसर्वपदार्थानां सत्ता ब्रह्मसंज्ञकं पदं बोध्यम् ॥ सच्चिदानन्दस्वरूपम् परं ब्रह्म परं तत्त्वं निरञ्जनं निर्विशेषम् अक्षरं परम् ब्रह्म ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥

एकं ब्रह्मैवानाद्यन्तम् निस्तरङ्गाब्धिवत्प्रविजृम्भते प्रकाशते ॥ यत्किञ्चिद्भावनाविषयीभूतन्न भवति तत्परं ब्रह्म विदुः ॥ ५२ इहास्मिन् किञ्चन किञ्चिदपि नानारूपं नास्ति ब्रह्मणोऽनानारूपत्वात् अतः एकमेव अद्वयं ब्रह्म ॥ वस्तुतः स्वेन रूपेण अवस्तुतोऽपि च विश्वाकारेणापि साक्षात् ब्रह्मैव विद्यते ब्रह्मातिरिक्तस्य मायामात्रत्वात् ॥ विद्याविषयं तद्ब्रह्म सत्यं ज्ञानं सुखम् अद्वयम् ॥ च पुनः शान्तं क्षोभरहितं तदतीतं मायातीतम् तत्परं ब्रह्म उच्यते ॥ ५१-५२-५३-५४-५५-५६ ॥

सर्वानुभूतितः परं सारं निर्विशेषं तस्मात् उक्तस्वरूपत्वात् ब्रह्मेति कथ्यते ॥ ५७ ॥

यदिदं पुच्छत्वेन सर्वाधारत्वेनोपबृंहितं सत्यज्ञानाद्वयस्वरूप-

सद्रूपं परमं ब्रह्म त्रिपरिच्छेदवर्जितम् ॥ ५९ ॥
तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् ॥ ६० ॥
सर्वाधिष्ठानमद्वन्द्वं परं ब्रह्म सनातनम् ॥ ६१ ॥
प्रज्ञानमेव तद्ब्रह्म सत्यप्रज्ञानलक्षणम् ॥ ६२ ॥
अस्तीत्युक्ते जगत्सर्वं सद्रूपं ब्रह्मतद्भवेत् ॥ ६३ ॥
भातीत्युक्ते जगत्सर्वं भानं ब्रह्मैव केवलम् ॥ ६४ ॥
ब्रह्ममात्रं चिदाकाशं सच्चिदानन्दमद्वयम् ॥ ६५ ॥
ब्रह्मणोऽन्यतरन्नास्ति ब्रह्मणोऽन्यज्जगन्न च ॥ ६६ ॥
ब्रह्मणोऽन्यदहं नास्मि ब्रह्मणोऽन्यत्फलं न हि ॥ ६७ ॥
ब्रह्मणोऽन्यद्दर्शं नास्ति ब्रह्मणोऽन्यत्पदं न हि ॥ ६८ ॥
ब्रह्मणोऽन्यद्गुरुर्नास्ति ब्रह्मणोऽन्यदसद्वपुः ॥ ६९ ॥
नित्यानन्दमयं ब्रह्म केवलं सर्वदा स्वयम् ॥ ७० ॥
बीजं मायाविनिर्मुक्तं परं ब्रह्मेति कीर्त्यते ॥ ७१ ॥

---

ब्रह्मणः ब्रह्मपुच्छाख्यत्वं ब्रह्मपुच्छंप्रतिष्ठेति वाक्येन आनन्दमयको-शप्रकरणे तैत्तिरीयोपनिषदा प्रतिपादितम् ॥ सत्तारूपम् उत्कृष्टम् अपरिच्छिन्नम् देशकालवस्तुकृतपरिच्छेदशून्यम् ॥ आनन्दस्वरूपम् अद्वन्द्वम् सुखदुःखरहितम् निर्गुणं सत्य चिद्घनम् तद्ब्रह्म ॥५८॥५९॥६०॥

यत् सर्वाधारभूतम् अद्वन्द्वम् परम् सनातनम् ब्रह्म ॥ सत्यप्रज्ञान-लक्षणम् केवलप्रज्ञानरूपं तद्ब्रह्म ॥ ६१ ॥ ६२ ॥

सर्वं जगत् अस्तीत्युक्ते तत्सद्रूपं ब्रह्म भवति ब्रह्मणः सत्तयैव सदिति प्रतीयते ॥ सर्वं जगत् भातीत्युक्ते भानरूपं ब्रह्मैव भवतीत्यर्थः ॥ ६३ ॥ ६४ ॥

आनन्दरूपमद्वयम् सच्चिदाकाशम् ब्रह्ममात्रं तद्भिन्नमन्यतरदित्या-द्यसद्वपुरित्यन्तं नास्ति तद्ब्रह्म केवलं सर्वदा स्वयं नित्यानन्दमयम् ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥

बीजं मायोपाधिकेश्वरः सृष्ट्यादिमूलत्वात् तत् मायाविनिर्मुक्तं

मद्रूपमद्वयं ब्रह्म आदिमध्यान्तवर्जितम् ॥ ७२ ॥
सर्वत्रावस्थितं शान्तं चिद्ब्रह्मेत्यनुभूयते ॥ ७३ ॥
सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ॥ ७४ ॥
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्लमम् ॥ ७५ ॥
स्वात्मन्यारोपिताशेषाभासवस्तुनिरासतः ॥ ७६ ॥
स्वयमेव परं ब्रह्म पूर्णमद्वयमक्रियम् ॥ ७७ ॥
राम एव परं ब्रह्म राम एव परं तपः ॥ ७८ ॥
राम एव परं तत्त्वं श्रीरामो ब्रह्मतारकम् ॥ ७९ ॥
चिद्रूपमात्रं ब्रह्मैव सच्चिदानन्दमद्वयम् ॥ ८० ॥
ऋतं सत्यं परं ब्रह्म सर्वसंसारभेषजम् ॥ ८१ ॥
ब्रह्म चिद् ब्रह्म भुवनं ब्रह्म भूतपरम्परा ॥ ८२ ॥

---

परं ब्रह्मेति कथ्यते ॥ तन्मायारहितम् अद्वयम् आदिमध्यान्तवर्जितम् मद्रूपम् अस्मत्प्रतीतिविषयीभूतं ॥ सर्वत्रावस्थितं शान्तं चिद्रूपं ब्रह्मेति अनुभूयते ॥ ७१ ॥ ७२ ॥ ७३ ॥

अध्यात्मशास्त्राणामीशाद्यष्टोत्तरशतोपनिषदां ब्रह्मव्यतिरिक्तं न किञ्चिदस्तीति सर्वापह्नव एव सिद्धान्तः "दृश्यरूपञ्च दृग्रूपं सर्वं शशविषाणवत्" इतिश्रुतेः ॥ अतएव स्वातिरिक्तकारणीभूतमायातत्कार्यविद्यासम्बन्धशान्तं तत्कृतग्लान्यभावादक्लममिदं ब्रह्ममात्रमवशिष्यते स्वारोपिताभासवस्तूनामतद्व्यावृत्त्या स्वयमेव ब्रह्म भवेदित्युत्तरेण सम्बन्धः ॥ ७४ ॥ ७५ ॥ ७६ ॥

निर्विशेषतया राजते महीयते इति रामः स स्वयमेव पूर्णम् अद्वयम् अक्रियम् परमं ब्रह्म सर्वस्मात् परत्वात् स्वाप्त्युपायभूतं तपो राम एव उपेयभूतं परं तत्त्वमपि राम एव सत्ता सामान्यरूपत्वात् श्रीराम एव तारकं ब्रह्म स्वाज्ञपटलसन्तारणात् ॥ ७७ ॥ ७८ ॥ ७९ ॥

ऋतं व्यावहारिकं सत्यं पारमार्थिकं चिद्रूपमात्रं सच्चिदानन्दरूपम् अद्वयम् ब्रह्मैव भजतां परब्रह्म भवरोगभेषजं भवतीत्यर्थः स्वाज्ञ-

ब्रह्माहं ब्रह्म चिच्छत्रुर्ब्रह्म चिन्मित्रबांधवाः ॥ ८३ ॥
ब्रह्मरूपतया ब्रह्म केवलं प्रतिभासते ॥ ८४ ॥
जगद्रूपतयाप्येतद्ब्रह्मैव प्रतिभासते ॥ ८५ ॥
विद्याविद्यादिभेदेन भावाभावादिभेदतः ॥ ८६ ॥
गुरुशिष्यादिभेदेन ब्रह्मैव प्रतिभासते ॥ ८७ ॥
इदं ब्रह्म परं ब्रह्म सत्यं ब्रह्म प्रभुर्हिसः ॥ ८८ ॥
कालो ब्रह्म कला ब्रह्म सुखं ब्रह्म स्वयंप्रभम् ॥ ८९ ॥
एकं ब्रह्म द्वयं ब्रह्म मोहो ब्रह्म शमादिकम् ॥ ९० ॥
दोषो ब्रह्म गुणो ब्रह्म दमः शान्तं विभुः प्रभुः ॥ ९१ ॥
लोको ब्रह्म गुरुर्ब्रह्म शिष्यो ब्रह्म सदाशिवः ॥ ९२ ॥
पूर्वं ब्रह्म परं ब्रह्म शुद्धं ब्रह्म शुभाशुभम् ॥ ९३ ॥
जीव एव सदा ब्रह्म स्वयं ब्रह्म सनातनमिति ॥ ९४ ॥

ओं तत्सदिति सार्द्धान्तिकब्रह्मस्वरूपमहावाक्यानि महावाक्यरत्नावल्यांसप्तदशप्रकरणे चतुर्नवतिः ॥

---

ब्रह्माहमादित्यन्यथा-न्तं ब्रह्म भूतपरम्परा भुवनञ्च स्वप्नदृष्ट्या तत्सर्वं चिद्रूपतया ब्रह्मैव प्रतिभासते ॥ विद्याविद्यादिभेदेन गुरुशिष्यादिभेदेन भावाभावादिभेदेन च जगद्रूपतयाप्येतद्ब्रह्मैव प्रतिभासते । वस्तुतः स्वमात्रमवशिष्यत इत्यर्थः ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ॥ ८६ ॥ ८७ ॥

स्वात्मस्वप्रदृष्टिभ्यामिदमित्यादिसनातनान्तरूपेण निर्विशेषं ब्रह्मैव भातीत्यर्थः ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायाम्महावाक्यरत्नावलिटीकायाम्प्रभाभिधानायाम्ब्रह्मस्वरूपवाक्यविवरणं सम्पूर्णम् ॥ आहत्य वाक्यानि पञ्चपञ्चाशदधिकाष्टशतम् ॥ ८५५ ॥

# अथ साद्धान्तिकावशिष्टस्वरूपवाक्यानि।

सर्वं विशेषन्नेति नेतीति विहाय यदवशिष्यते तदद्वयं ब्रह्म ॥ १ ॥
जीवभावजगद्भावबाधे प्रत्यगभिन्नं ब्रह्मैवावशिष्यते ॥ २ ॥
पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ॥ ३ ॥
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ४ ॥
कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ॥ ५ ॥
कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते ॥ ६ ॥
ततस्तिमितगम्भीरं न तेजो न तमस्ततम् ॥ ७ ॥
अनाख्यमनभिव्यक्तं सत्किञ्चिदवशिष्यते ॥ ८ ॥
सङ्कल्पमनसीभिन्ने न कदाचन केनचित् ॥ ६ ॥

---

अथ साद्धान्तिकावशिष्टवाक्यानि लिख्यन्ते सर्वमित्यादिना ॥ स्वाश्रयिकल्पितसर्वं विशेष प्रपञ्चन्नेति नेतीति विहाय तन्निषेधास्पदतया यदवशिष्यते तदेवाद्वितीयं ब्रह्म ॥ १ ॥

स्वस्मिन् स्वातिरिक्ते च समारोपितजीवभावजगद्भावयोर्ब्रह्मातिरिक्तं नास्तीति बाधितयोः सतोः प्रत्यगभिन्नं ब्रह्मैवावशिष्यते ॥२॥

पूर्णमद इत्यादिवाक्यद्वय शान्तिप्रकरणे व्याख्यातम् ॥३ ॥ ४ ॥

अयं जीवः अविद्याकार्योपाधिः ईश्वरो मायारूपकारणोपाधिः ॥ कार्यकारणत्वे हित्वा पूर्णबोधः परमात्मैवावशिष्यते ॥ ५ ॥ ६ ॥

यतो निर्विशेष ततस्तिमितगम्भीर निश्चलगम्भीरं व्यापकत्वात् तत्किन्तेज इति नेत्याह न तेज इति भूतभौतिकत्वाभावात् तथा चेत्तमोरूपं वा स्यादित्यनाह न तम इति स्वाज्ञानतमसोभावात् किन्तत् ततम् व्याप्यसत्वे तद्व्यापकम् ॥ तदाख्या किमिति अनाख्यम् ब्रह्मेत्याख्याया अपि मायिकत्वात् तर्हिकरूपेणाभिव्यक्तमितिचेत् अनभिव्यक्तम् स्वरूपज्ञानं विनाऽनभिव्यक्तित्वात् उक्तविशेषणविशिष्टं सत् किञ्चिन्निर्विशेषं स्वमात्रमवशिष्यते इत्यर्थः ॥ ७ ॥ ८ ॥

वृत्तिवृत्तिमतोरभेदात् सङ्कल्पमनसोः कदापि भेदो न विद्यते ॥

सङ्कल्पजाते गलिते स्वरूपमवशिष्यते ॥ १० ॥
महाप्रलयसम्पत्तौ ह्यसत्तां समुपागते ॥ ११ ॥
अशेषदृश्ये सर्गादौ शान्तमेवावशिष्यते ॥ १२ ॥
खेदोल्लासविलासेषु स्वात्मकर्तृतयानया ॥ १३ ॥
स्वसङ्कल्पे क्षयं याते समतैवावशिष्यते ॥ १४ ॥
समता सर्वभावेषु यासौ सत्यपरास्थितिः ॥ १५ ॥
परमामृतनाम्नी सा समतैवावशिष्यते ॥ १६ ॥
कालत्रयमुपेक्षित्वा हीनायाश्चैत्यबन्धनैः ॥ १७ ॥
चितश्चैत्यमनुपेक्षित्र्याः समतैवावशिष्यते ॥ १८ ॥
सा हि वाचामगम्यत्वादसत्तामिव शाश्वतीम् ॥ १९ ॥

---

तत्र ब्रह्मातिरिक्तं नेति कामसङ्कल्पादिवृत्तिविकल्पे गलिते नष्टे सत्यथ स्वस्वरूपमात्रमवशिष्यते ॥ ९ ॥ १० ॥

विश्वस्य सर्गादौ सृष्टिस्थितिप्रलयकाले महाप्रलयकाले च विश्वं जातं स्थितं नष्टमिति यद्दृश्यते तस्मिन्नशेषदृश्ये असत्तामभावरूपतां गते सति शान्तं ब्रह्मैवावशिष्यते ॥ ११ ॥ १२ ॥

अस्मदादिः कथञ्चित्सञ्जातखेदोल्लासविलासेषु दुःखी सुखी कृष्यादिकर्मकर्ता तत्फलभोक्तेति चानया स्वात्मकर्तृतया मनःकल्पितकर्तृतया विकल्पितस्वसङ्कल्पे क्षयं याते नष्टे स्वातिरिक्तविषमताभाससमता सच्चिदानन्दरूपिण्येवावशिष्यते ॥ १३ ॥ १४ ॥

सर्वभावेषु नामरूपादिसम्बन्धाद्विषमेष्वपि स्वस्वरूपा यासौ सत्या सच्चिदानन्दरूपिणी परास्थितिर्विभाति सेयं परमामृतनाम्नी विदेहकैवल्यरूपिणी समतैवावशिष्यते ॥ १५ ॥ १६ ॥

भूतादिकालत्रयमुपेक्षित्वा चैत्यबन्धनैर्विहीनायाः अत एव चैत्यं चित्यमनुपेक्षित्र्याः उपेक्षमाणायाः चितः जीवसम्विदः परब्रह्मरूपिण्याः स्थिता सद्रूपतः शुद्धसमतैवावशिष्यते ॥ १७ ॥ १८ ॥

यथा सा चित् जीवसम्वित् वाङ्मनसागम्यतया शाश्वतीम् असत्तां मायामुपगता तथा कथञ्चित् ज्ञानोदयात् ऐकात्म्यसिद्धान्त-

नैरात्म्यसिद्धान्तदशामुपयातेऽवशिष्यते ॥ २० ॥
यावद्यावन्मुनिश्रेष्ठ स्वयं सन्त्यज्यतेऽखिलम् ॥ २१ ॥
तावत्तावत्परालोकः परमात्मैव शिष्यते ॥ २२ ॥
अभ्यासेन परिस्पन्दे प्राणानां क्षयमागते ॥ २३ ॥
मनः प्रशममायाति निर्वाणमवशिष्यते ॥ २४ ॥
ज्ञेयवस्तुपरित्यागे विलयं याति मानसम् ॥ २५ ॥
मानसे विलयं याते कैवल्यमवशिष्यते ॥ २६ ॥
यतो वाचो निवर्तन्ते विकल्पकलनान्विताः ॥ २७ ॥
विकल्पसंक्षयाज्जन्तोः पदं तदवशिष्यते ॥ २८ ॥
चिद्व्योमैव किलास्तीह परापरविवर्जितम् ॥ २९ ॥
सर्वभासम्भवच्चैत्यं यत्कल्पान्तेऽवशिष्यते ॥ ३० ॥

---

दशामुपयाते उपयाता सती अवशिष्यते उपयाते इत्यार्षः प्रयोगः । आत्मा जीवः अनात्मा देहादिरिति धीर्यस्यां पारमार्थिकदशायामाविर्भवति सा नैरात्म्यसिद्धान्तदशेत्यर्थः ॥ १९ ॥ २० ॥

हे मुनिश्रेष्ठ यावत् यावत् यदा यदा स्वयम् आत्मना अखिलं विषयजातं सन्त्यज्यते तावत् तावत् तदा तदा परालोकः परः उत्कृष्टः आलोकः ज्ञानं यस्य स तथोक्तः ज्ञानी अन्ततः परमात्मैव शिष्यते ॥२१॥२२

योगाभ्यासेन प्राणानां परिस्पन्दे चलने क्षयमागते सति स्वालम्बनप्राणापानादिवृत्त्यभावात् मनः प्रशमं प्रशान्तिमायाति ततो निर्वाणं कैवल्यमवशिष्यते ॥ २३ ॥ २४ ॥

ब्रह्मवित् विषयमात्रं यदा परित्यजति तदा मानसं विलयं याति अथ तस्मिन् विलीने कैवल्यमवशिष्यते ॥ २५ ॥ २६ ॥

यतो निर्विशेषब्रह्मणः सकाशाद् घटपटादिविकल्पान्विता वाचो निवर्तन्ते ततो जन्तोश्चित्तविभातनानाविकल्पसंक्षयात् यन्निर्विशेषतया पद्यते ज्ञायते इति पदम् तद्‌द्ब्रह्मैवावशिष्यते ॥ २७ ॥ २८ ॥

इहाद्यापि पुराकल्पान्ते च सवत्र सर्वावस्थास्वपि स्वभेदेनासम्भवच्चैत्यं सर्वविषयरहितम् इद परमुत्कृष्टम् इदमपरमपकृष्टं तद्वर्जितम् यच्चिद्व्योमैवास्ति तदेवावशिष्यते ॥ २९ ॥ ३० ॥

पञ्चरूपपरित्यागादर्थरूपप्रहाणतः । ३१ ॥
अधिष्ठानं परन्तत्त्वमेकं सच्छिष्यते महत् ॥ ३२ ॥
सर्ववेदान्तसिद्धान्तसारं वच्मि यथार्थतः ॥ ३३ ॥
स्वयं मृत्वा स्वयं भूत्वा स्वयमेवावशिष्यते ॥ ३४ ॥
अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्चयत् ॥ ३५ ॥
अनाद्यनन्तं महतः परं ध्रुवं तदेव शिष्यत्यमलं निरामयम् ॥३६॥

ओं तत्सदिति साद्धान्तिकावशिष्टस्वरूपमहावाक्यानि महावाक्यरत्नावल्यामष्टादशप्रकरणे षट्त्रिंशत् ॥

---

निर्विशेषब्रह्मातिरिक्तं किञ्चिदस्तीति पञ्चतत्त्वपरित्यागात् अर्थरूप प्रहाणतः तत्कार्यसृष्टित्यागाच्च पञ्चतत्त्वतत्कार्यप्रपञ्चाधिष्ठानं महदपरिच्छिन्नं परं तत्त्वं स्वयमेकं सदवशिष्यते ॥ ३१ ॥ ३२ ॥

हे शिष्य सर्ववेदान्त सिद्धान्तसारं यथार्थतो वच्मि तच्छृणु किन्तदिति चेत्स्वयं मृत्वा देहाद्यहंभावं निःशेषतस्त्यक्त्वा स्वयं ब्रह्म भूत्वा निरधिष्ठानरूपेण स्वयमेवावशिष्यते इति यत्तदेव सर्ववेदान्तसिद्धान्तभूतमित्यर्थः ॥ ३३ ॥ ३४ ॥

यत् शब्दरहितं स्पर्शरहितं रूपरहितम् अव्ययम् अनश्वरम् तथा अरसं नित्यम् गन्धशून्यम् आद्यन्तरहितम् महतः परं ध्रुवम् अमलं निरामयं तदेव ब्रह्मैव शिष्यति शिष्यते ॥ ३५ ॥ ३६ ॥

इति मैथिल श्रीत्रिलोकनाथमिश्रप्रणीतायाम्महावाक्यरत्नावलिटीकायाम्प्रभाभिधानायामवशिष्टस्वरूपवाक्यविवरणं सम्पूर्णम् ॥ आहत्यवाक्यानि एकनवत्यधिकाष्टशतम् ॥ ८९१ ॥

# अथ फलस्वरूपमहावाक्यानि ।

स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति ॥ १ ॥
ब्रह्मविदाप्नोति परम् ॥ २ ॥
ब्रह्मसंस्थोऽमृतत्वमेति ॥ ३ ॥
तरति शोकमात्मवित् ॥ ४ ॥
य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति ॥ ५ ॥
स एष विमुक्तो विमुक्तो ब्रह्मविद्विद्वान् ब्रह्मैवाभिप्रैति ॥ ६ ॥
य एवं निर्बीजं वेद निर्बीज एव स भवति ॥ ७ ॥
तद्ब्रह्मैवाहमस्मीति ब्रह्म प्रणवमनुस्मरन् भ्रमरकीटन्यायेन शरीरत्रयमुत्सृज्य सन्न्यासेनैव देहत्यागं करोति स कृतकृत्यो भवति॥८॥

---

अथ फलस्वरूपमहावाक्यानि लिख्यन्ते स य इत्यादिना ॥ यो ह वैतन्निर्विशेषं परमं ब्रह्म वेद स्वमात्रमिति जानाति ज्ञानसमकालं स मुनिर्ब्रह्मैव भवति ॥ १ ॥
ब्रह्मवित् परम् ब्रह्म आप्नोति ॥ २ ॥

ब्रह्मसंस्थः मुनिः निर्विशेषब्रह्मज्ञानातोऽमृतत्वं मोक्षमेति ॥ ३ ॥

आत्मवित् कामादिवृत्तिप्रभवं शोकं तरति ॥ ४ ॥

य एवं सर्वं ब्रह्म तदन्तःपातित्वादहमपि ब्रह्मास्मीति वेद चेत्सदा सोपि इदं सर्वं भवति सर्वात्मा भवतीत्यर्थः ॥ ५ ॥

स एष ब्रह्मविद्विद्वान् तद्वेदनसमकालं पुण्यपापरहितो भूत्वा ब्रह्मैवाभिप्रैति प्राप्नोतीत्यर्थः ॥ ६ ॥

य एवं निर्बीजनिर्विशेषं ब्रह्म वेद स निर्बीजः निर्विशेषब्रह्मैव भवतीत्यर्थः ॥ ७ ॥

यत्तुरीयोङ्काराग्रविद्योतं तत्तुरीयं ब्रह्मैवाहमस्मीति ब्रह्म प्रणवानुसन्धानं कुर्वन् यथा कीटकः भ्रमरं ध्यायमानो भ्रमरो भवति कीटत्वाभिमानं विहायेत्यर्थः तथाऽयं विद्वान् सामान्येन शरीरत्रयाभिमतिमुत्सृज्य स्वातिरिक्तसामान्यसन्न्यासेन निःशेषतो देहाभिमानत्यागं यदा करोति तदा कृतकृत्यो मुक्तो भवतीत्यर्थः ॥ ८ ॥

तमेवं ज्ञात्वा विद्वान् मृत्युमुखात् प्रमुच्यते ॥ ९ ॥
तदेवं विद्वांस इहैवामृता भवन्ति ॥ १० ॥
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥११॥
यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ १२ ॥
यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ॥१३॥
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥१४॥
एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सौम्य ॥१५॥
भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः ॥ १६ ॥

---

यः परमात्मा एवं निर्विशेषचिद्धातुत्वेनोक्तस्तं स्वमात्रमिति ज्ञात्वा विद्वान् मृत्युः संसारस्तन्मुखात्प्रमुच्यते मुक्तो भवति ॥ यदा निर्विशेषं ब्रह्म स्वमात्रमिति जानन्ति विद्वांसस्तदैवमिहैवामृता भवन्ति जीवन्मुक्ता भवन्तीत्यर्थः ॥ ९ ॥ १० ॥

अनाद्यनन्तं महतः परं ध्रुवम् तमात्मानं निचाय्य ज्ञात्वा तत्समकालं मृत्युमुखात् संसारबन्धात्प्रमुच्यते ॥ जन्तुः विद्वान् यज्ज्ञात्वा बन्धनात्मुच्यते अमृतत्वञ्च गच्छति जीवन्मुक्तिं प्राप्नोति ॥ ११ ॥ १२॥

यदा निर्विशेषं ब्रह्म स्वमात्रमिति पश्यतीति पश्यः विद्वान् स्वयं प्रकाशत्वेन रुक्मवर्णं सुवर्णरूपं कर्तव्यभ्रमकर्ता कर्तारमीशितव्यप्राण्यपेक्षत ईशं पूर्णत्वात्पुरुषं निरुपाधिसोपाधिभ्यां ब्रह्मयोनिं वस्तुचिद्धातुं स्वमात्रमिति पश्यते पश्यति तदा पुण्यपापे विधूय तत्रापि निरञ्जनः सन् निर्वैषम्यं परमं साम्यं सत्तासामान्यं स्वमात्रमित्युपैति प्रतिपद्यते ॥ १३ ॥ १४ ॥

हे सौम्य एतद्ब्रह्म यो विद्वान् प्रत्यग्रूपेण सर्वप्राणिगुहायां निहितं वेद तद्वेदनसमकालं सोऽयं विद्वान् अविद्यमानाविद्याग्रन्थिं स्वातिरिक्तमस्ति नास्तीति विभ्रमरूपमिह जीवन्नेवामृतः सन् विकिरति विनाशयतीत्यर्थः ॥ १५ ॥

तस्मिन् परावरे निर्विशेषे ब्रह्मणि दृष्टे सति अन्यमलपिदः हृदयग्रन्थिःभिद्यते हृदयग्रन्थिरहङ्कारो भिद्यते नश्यतीत्यर्थः यथा हृद्गिरविद्यापदमयमिति तदात्मपरम् तयोराधेयाधारतया तादात्म्यसम्बन्धो हि हृदयग्रन्थिः ब्रह्मज्ञानवह्निना भिद्यते भिन्नो भवति प्राणो

क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे ॥ १७ ॥
यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ॥१८॥
तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥१९॥
ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥ २० ॥
तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म सम्पद्यते ध्रुवम् ॥ २१ ॥
यत्र यत्र मृतो ज्ञानी परमात्तरवित्सदा ॥ २२ ॥
परब्रह्मणि लीयेत न तस्योत्क्रान्तिरिष्यते ॥ २३ ॥
यद्यत्स्वाभिमतं वस्तु तत्त्यजन् मोक्षमश्नुते ॥ २४ ॥
असङ्कल्पेन शस्त्रेण छिन्नं चित्तमिदं यदा ॥ २५ ॥

---

अविद्यातः स्वस्य पार्थक्यं निश्चिनोति ततो निरुक्ततादात्म्यसम्बन्धो निवर्त्तते सर्वसंशयाः लौकिकवैदिकपरावरविद्याविषयकज्ञानफलमोक्षमन येत्यादिरूपाः छिद्यन्ते नश्यन्ति अस्यैव ज्ञानिनः कर्म्माणि वर्तमानसञ्चितसमारब्धानि क्षीयन्ते प्रारब्धकर्मणः फलानुभावत्वात्क्षीणत्वसादृश्या क्षीणत्वं वेद्यम् ॥ १६ ॥ १७ ॥

यथा गङ्गाकावेर्यादिनद्यः स्यन्दमानाः प्रवहन्त्यः गङ्गाकावेरीत्यादिनामरूपे विहाय समुद्रेऽस्तमदर्शनं गच्छन्ति तथा विद्वान् गौरोऽहं देवदत्त इत्यादिनामरूपाद्विमुक्तः सन् दिव्यं स्वयं प्रकाशं परात्साक्षिणोऽपि परं पुरुषं निर्विशेषचिद्रूपमुपैति ॥ १८ ॥ १९ ॥

तं परमात्मानं ज्ञात्वा मृत्युमत्येति अतिक्रामति मुक्तये अन्यः पन्था न विद्यते मुक्तिसाधनं ज्ञानमेवेति भावः ॥ २० ॥

अहं तद्ब्रह्मेति ज्ञात्वा ध्रुवमिति निश्चयेन ब्रह्म सम्पद्यते ब्रह्मस्वरूपो भवतीत्यर्थः ॥ २१ ॥

परमात्तरवित् ज्ञानी यत्रयत्र यत्रकुत्रापि सदा सर्वस्मिन्काले मृतः म्रियते ॥ परब्रह्मणि लीयेत लीयते न तस्योत्क्रान्तिरिष्यते न पुनर्जन्म भवतीत्यर्थः "अत्रैव समवलीयत" इति श्रुतेः ॥ यद्यत्स्वाभिमतं विषयजातं तत्सर्वं त्यजन् मोक्षमश्नुते ॥ यदा सङ्कल्पसामान्यत्यागशस्त्रेण

सर्वं सर्वगतं शान्तं ब्रह्म सम्पद्यते तदा ॥ २६ ॥
प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ॥ २७ ॥
विसृज्य ध्यानयोगेन ब्रह्माप्येति सनातनम् ॥ २८ ॥
घटाकाशमिवात्मानं विलयं वेत्ति तत्त्वतः ॥ २९ ॥
स गच्छति निरालम्बं ज्ञानालोकं सनातनम् ॥ ३० ॥
तृणाग्रेष्वम्बरे भानौ नरनागामरेषु च ॥ ३१ ॥
यस्तिष्ठति तदेवाहमिति मत्वा न शोचति ॥ ३२ ॥
सर्वसाक्षिणमात्मानं वर्णाश्रमविवर्जितम् ॥ ३३ ॥
ब्रह्मरूपतया पश्यन् ब्रह्मैव भवति स्वयम् ॥ ३४ ॥
तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् ॥ ३५ ॥
विदित्वा स्वात्मनो रूपं न बिभेति कुतश्चन ॥ ३६ ॥

---

चित्तमिदं छिन्नं भवति ॥ तदा योगी सर्वरूपेण सर्वगतत्वेन शान्तं ब्रह्म सम्पद्यते ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

योगी सुकृतं पुण्यं स्वेषु प्रियेषु स्वस्तुतिपूजादिकारिषु अप्रियेषु निन्दाताडनादिकारिषु दुष्कृतं पापञ्च विसृज्य ध्यानयोगेन सनातनं ब्रह्म स्वावशेषधियां अप्येति प्राप्नोति ॥ २७ ॥ २८ ॥

यः घटाकाशमिव आत्मानं तत्त्वतः विलयं स्वातिरिक्तभ्रमलयाधिकरणं वेत्ति यथा घटाकाशमुपाधिनिगमेन महाकाशमात्रं तथात्मानं जीवमुपाधिराहित्यात् ब्रह्ममात्रं वेत्ति चेत्तदा स ज्ञानालोकं ज्ञानैकगम्यं सनातनं निरालम्बं निर्विशेषमाव गच्छति ॥ २९ ॥ ३० ।

अम्बरादिपञ्चभूतभौतिकेष्वपि ॥ प्रत्यगभिन्नब्रह्मरूपेण यस्तिष्ठति तदेवाहमिति मत्वा भेदाभावान्न शोचति ॥ यश्च वर्णाश्रमातीतसर्वसाक्षिणमात्मानं ब्रह्मरूपतया पश्यति स स्वयं प्रत्यगभिन्नब्रह्मैव भवति ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

स्वात्मनः जीवस्य रूपमानन्दस्वरूपम् अद्वन्द्वम् निर्गुणम् सत्यं चिद्घनम् तत् ब्रह्मेति विदित्वा कुतश्चन कस्मादपि न बिभेति स्वस्यैव परमाद्वयत्वेन निर्भयप्राप्तत्वात् ॥ ३५ ॥ ३६ ॥

वासनां सम्परित्यज्य मयि चिन्मात्रविग्रहे ॥ ३७ ॥
यस्तिष्ठति गतस्नेहः सोऽहं सच्चित्सुखात्मकः ॥ ३८ ॥
दर्शनादर्शने हित्वा स्वयं केवलरूपतः ॥ ३९ ॥
य आस्ते कपिशार्दूल ब्रह्म न ब्रह्मवित्स्वयम् ॥ ४० ॥

ओं तत्सदिति सार्द्धान्तिकफलमहावाक्यानि महावाक्यरत्नावल्यामृनविंशप्रकरणे चत्वारिंशत् ॥



---

य चिन्मात्रविग्रहे मयि यत्र कुत्रापि विगतस्नेह सन् स्वातिरिक्त वस्तुगोचरनानावासनाजाल परित्यज्य स्वातिरिक्त नेत्यपह्नुय एत्या तिष्ठति सोऽहं सच्चिदानन्दरूपो भवामीत्यर्थ ॥ ३७ ॥ ३८ ॥

यस्तु ब्रह्मवित् दर्शनादर्शने व्यक्ताव्यक्तप्रपञ्चे हित्वा केवलब्रह्म रूपतयास्ते। हे मारुते स स्वय ब्रह्मैव न ब्रह्मवित् वेदनसमकालमेव विदुषो ब्रह्मरूपत्वादित्यर्थ ॥ ३९ ॥ ४० ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायाम्महावाक्यरत्नावलि-टीकायाम्प्रभाभिधानायाम्फलवाक्यविवरण सम्पूर्णम्॥ आहत्यवाक्यानि एकत्रिंशदधिकनवशतम् ॥ ९३१ ॥



# अथ सांद्धान्तिकविदेहमुक्तिवाक्यानि ॥

विमुक्तश्च विमुच्यते ॥ १ ॥

गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ २ ॥

अथाकामयमानो योऽकामो निष्काम आत्मकाम आप्तकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येति ॥ ३ ॥

तद्यथाहि निर्ल्वयिनी वल्मीके मृताप्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमशरीरोऽमृतः प्राणोब्रह्मैव तेज एव ॥ ४ ॥

---

अथ सार्द्धान्तिकविदेहमुक्तिवाक्यानि लिख्यन्ते विमुक्तश्चेत्यादिना ॥ यः विमुक्तः जीवन्मुक्तः स एव विमुच्यते देहावसाने मुक्तिं लभते ॥ १ ॥

अयं जीवः हृदयगुहाश्रयाविद्याग्रन्थिभ्यः पुरैव विमुक्तः जीवन्मुक्तः स देहावसानेऽपि अमृतो भवति ॥ २ ॥

अथ स्वातिरिक्तप्रपञ्चविरक्त्यनन्तरं कमनीयविषयाभावादकामयमानःयोऽयमकामः कामाः बन्धनहेतवः यस्मान्निर्गताः सोऽयं निष्कामः आत्मैव कामो यस्य सोऽयमात्मकामः स्वरूपावाप्त्याप्तकामश्चयः निर्विशेषं ब्रह्म स्वमात्रमिति जानाति तस्य प्राणा न उत्क्रामन्ति शरीरान्तरं नावलम्बते किन्तु अत्रैव समवलीयन्ते प्राणादयः स्वाधिकरणे लीना भवन्ति एवञ्च ब्रह्मैव सन् ब्रह्माप्येतीत्युपचर्यते ॥ ३ ॥

तत् तत्र यथा लोके अहिनिर्ल्वयिनी सर्पत्वक् स्वाश्रयवल्मीकादौ मृता मृतसर्पवत्प्रतिभासमाना प्रत्यस्ता परित्यक्ता शयीत वर्त्तेत एवमेव ममत्वरहितमिदं शरीरं शेते तिष्ठति अथायं विद्वान् सर्पवत्तत्र विद्यमानोऽपि अशरीरः पूर्ववच्छरीररहितः अत एवायममृतः जीवन्मुक्तः प्राणितीति प्राणः प्राणादिप्रवृत्तिनिमित्तत्वात् चिन्मात्रत्वात्तेजोरूप ब्रह्मैवेत्यर्थः ॥ ४ ॥

अशरीरो निरिन्द्रियोऽप्राणोऽतमाः सच्चिदानन्दमात्रः स स्वराड् भवति ॥ ५ ॥

पृथिव्यप्सु प्रलीयत आपो ज्योतिषि लीयन्ते ज्योतिर्वायौ विलीयते वायुराकाशे आकाशमिन्द्रियेष्विन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ विलीयन्ते भूतादिर्महति विलीयते महानव्यक्ते विलीयतेऽव्यक्तमक्षरे विलीयतेऽक्षरं तमसि विलीयते तमः परे देव एकीभवति परस्तान्न सन्नासन्न सदसत् ॥ ६ ॥

ब्रह्माण्डं तद्गतलोकान् कार्यरूपांश्च कारणत्वं प्रापयित्वा ततः सूक्ष्माङ्गं कर्मेन्द्रियाणि प्राणांश्च ज्ञानेन्द्रियाण्यन्तःकरणचतुष्टयञ्चैकीकृत्य सर्वाणि भौतिकानि कारणे भूतपञ्चके संयोज्य भूमिं जले जलं वह्नौ वह्निं वायौ वायुमाकाशे चाकाशमहङ्कारे चाहङ्कारं महति महदव्यक्ते अव्यक्तं पुरुषे क्रमेण विलीयते विराड्हिरण्यगर्भेश्वरा

---

स विद्वान् अशरीरः अनिन्द्रियः अप्राणः अतमाः तमः स्वाज्ञानं तद्विकलः सच्चिदानन्दस्वरूपः स्वराट् स्वे महिम्नि राजते इति स्वराड् भवति ॥ ५ ॥

सृष्टि संहारक्रमेण पृथिव्यादि स्वस्वकारणेषु विलीयते आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु अपञ्चीकृतपञ्चमहाभूतानि भूतादौ अहङ्कारे विक्षेपबीजे तत्तु महत्यावरणे तत्त्वव्यक्ते तत्त्वक्षरे अक्षरं तमसि सर्वाधिकरणे साक्षिणि साक्षी तु परे देवे निर्विशेषब्रह्मणि एकीभवति तत्परस्तात् सत्त्वेनासत्त्वेनासदसत्त्वेन वा स्वातिरिक्तं नास्तीत्यर्थः ॥ ६ ॥

ब्रह्माण्डं तद्गतलोकान् कार्यरूपांश्च कारणत्वं प्रापय्य स्वस्वकारणे प्रविलाप्य सूक्ष्माङ्गम् तन्मात्राणि कर्मेन्द्रियाणि प्राणांश्च ज्ञानेन्द्रियाणि अन्तःकरणचतुष्टयञ्चैकीकृत्य सर्वेषां भौतिकानां स्वस्वकारणे भूतपञ्चके संयोजनम् तद्यथा भूमिं जले जलं वह्नौ वह्निं वायौ वायुमाकाशे चाकाशमहङ्कारे तमहङ्कारमावरणात्मके महति तत्त्वव्यक्तेऽव्यक्तं निर्विशेषपुरुषे

उपाधिविलयात्परमात्मनि लीयन्ते ॥ ७ ॥
प्रारब्धक्षयवशाद्देहत्रयभङ्गं प्राप्योपाधिनिर्मुक्तघटाकाशवत्परिपूर्णता विदेहमुक्तिः ॥ ८ ॥
यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ॥ ९ ॥
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १० ॥
वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः ॥११॥
ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥ १२ ॥
तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः १३

क्रमेण विलीयते तत्समष्ट्यारोपाधाराविराडादयः स्वस्वोपाधिलयात् परमात्मनि लीयन्ते ॥ ७ ॥

उपाधिविनिर्मुक्तघटाकाशो यथा परिपूर्णाकाशपदं भजति तथा विदुषः प्रारब्धकर्मक्षयानन्तरं प्रातिभासिकदेहत्रयभङ्गं प्राप्य परिपूर्णरूपा या स्थितिः सैव विदेहमुक्तिरित्यर्थः ॥ ८ ॥

विदुषोऽस्य हृदयाश्रिता निर्विशेषब्रह्मावरणरूपा ये सर्वे कामाः सन्ति ते यदा प्रमुच्यन्ते परित्यक्ता भवन्ति ॥ अथ सर्वकामत्यागानन्तरं पुरा देहित्वेन मर्त्योऽपि अमृतो अमरणधर्मा भवति अत्रास्मिन् शरीरे स्थितोपि ब्रह्म समश्नुते विदेहमुक्तो भवतीत्यर्थः ॥ ९ ॥ १० ॥

ईशादिसर्ववेदान्तार्थज्ञानं यैः सुनिश्चितं ते वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगादेव शुद्धसत्त्वप्रधानाः ये यतयस्ते ब्रह्मैव लोको ब्रह्मलोकः साधकानां बाहुल्याद्बहुवचनम् ब्रह्मणीत्यर्थः परस्य भेदभानस्यान्तमवसानं तत्कलयतीति परान्तकालः परसम्यक्ज्ञानं तस्मिन् प्राप्ते सति तत्समकालम् परामृताः परममृतम् अमरणधर्मकं ब्रह्म येषां ते तथोक्ताः जीवन्त एव ब्रह्मभावमापन्नाः विभिन्नघटाकाशवन्निःस्नेहदीपवच्च सर्वे परिमुच्यन्ते ब्रह्ममात्रपर्य्यवसन्ना विदेहमुक्ता भवन्तीत्यर्थः ॥ ११ ॥ १२ ॥

तस्य निर्विशेषब्रह्मणः अभिध्यानात् योजनात् जीवात्मपरमात्मनोरैक्यात् तत्त्वभावात् तत्त्वज्ञानहेतुभूतसम्यग्ज्ञानात् भूयश्चान्ते पुनरवसाने विश्वमायानिवृत्तिः कार्यकारणरूपविश्वमायाया आत्यन्तिकी निवृत्तिर्भवेदित्यर्थः ॥ १३ ॥

जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ॥ १४ ॥
विशत्यदेहमुक्तत्वं पवनो स्पन्दतामिव ॥ १५ ॥
ततः सत्सम्बभूवासौ यद्गिरामप्यगोचरम् ॥ १६ ॥
यच्छून्यवादिनां शून्यं ब्रह्म ब्रह्मविदाञ्च यत् ॥ १७ ॥
विज्ञानमात्रं विज्ञानविदां यदमलात्मकम् ॥ १८ ॥
पुरुषः साङ्ख्यदृष्टीनामीश्वरो योगवादिनाम् ॥ १९ ॥
शिवः शैवागमस्थानां कालः कालैकवादिनाम् ॥ २० ॥
यत्सर्वशास्त्रसिद्धान्तं यत्सर्वहृदयानुगम् ॥ २१ ॥
यत्सर्वं सर्वगं वस्तु यत्तत्त्वं तदसौ स्थितः ॥ २२ ॥
यदनुत्तमनिष्पन्दं दीपकं तेजसामपि ॥ २३ ॥

---

पवनो स्पन्दतामिव यथा पवनः व्योम्नि अस्पन्दतामगतिमेत्य व्योमैव भवति तथा मुनिः जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते नष्टे अदेहमुक्तत्वं विशति विदेहमुक्तो भवतीत्यर्थः ॥ १४ ॥ १५ ॥

ततः आत्यन्तिकाभिमाननिवृत्त्यनन्तरं जीवन्मुक्तिदशावसाने असौ मुनिः शून्यवादिनां यत् शून्यं ब्रह्मविदाञ्च यत् ब्रह्म विज्ञानविदां यत् अमलात्मकं विज्ञानं साङ्ख्यदृष्टीनां यः पुरुषः योगवादिनां य ईश्वरः शैवागमस्थानां यः शिवः कालैकवादिनां यः कालः यद्गिरामप्यगोचरम् तत्सम्बभूव विदेहमुक्तो बभूवेति सारम्॥१६॥१७॥१८॥१९॥२०॥

यत् आस्तिकादिसर्वशास्त्रप्रमेयगतदोषदूरीकरणेन सिद्धसिद्धान्तरूपं यत् सर्वहृदयाश्रयम् जीवरूपम् स्वातिरिक्तसर्वसत्त्वे यत्सर्वं सर्वस्वरूपं सर्वगतं सर्वाधारभूतम् यद्वस्तु यद्व्याप्यव्यापकादिसम्बन्धापगमात् परमार्थतत्त्वमवशिष्टं तदेवासौ स्थित. विदेहमुक्तो बभूवेत्यर्थः ॥२१॥२२॥

चित् सूर्यत्वात् यदनुत्तमनिष्पन्दम् उत्कृष्टाचलम् यत्सूर्यादितेजसामप्युद्योतकम् पुनः स्वानुभवमात्रप्रमाणं यत्तत्त्वं तदसौ स्थितः विदेहमुक्तो बभूवेत्यर्थः ॥ स्वाज्ञस्वज्ञदृष्टिभ्यां यदनेकत्वेनैकत्वेन ख्याञ्जनत्वेन

स्वानुभूत्यैकमानञ्च यत्तत्त्वं तदसौ स्थितः ॥ २४ ॥
यदेकञ्चाप्यनेकञ्च साञ्जनञ्च निरञ्जनम् ॥ २५ ॥
यत्सर्वञ्चाप्यसर्वञ्च यत्तत्त्वं तदसौ स्थितः ॥ २६ ॥
निरानन्दोऽपि सानन्दः सच्चासच्च बभूव सः ॥ २७ ॥
न चेतनो न च जडो न चैवासन्नसन्मयः ॥ २८ ॥
अजममरमनाद्यमाद्यमेकं पदममलं सकलञ्च निष्कलञ्च ॥ २९ ॥
स्थित इति स तदा नभःस्वरूपादपि विमलस्थितिरीश्वरः क्षणेन ३०
व्यपगतकलनाकलङ्कशुद्धः स्वयममलात्मनि पावने पदेऽसौ ॥३१॥

---

समायत्वेन निरञ्जनत्वेन निर्मायत्वेन सर्वत्वेनासर्वत्वेन भातं यत्तत्त्वं तदसौ स्थितः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

यो विदेहमुक्त इति ख्यातः स एव स्वात्मस्वरूपदृष्टिभ्यां निरानन्दः सानन्दः सदसच्च बभूव परमार्थदृष्ट्यायं न चेतनः चेतयितृत्वासम्भवात् न च जडः अविद्याराहित्यात् न चैवासदमूर्तम् मानसाग्राह्यत्वात् न सन्मयः मूर्तस्वरूपश्च न चक्षुराद्यग्राह्यत्वात् किन्त्वनृतजडदुःखापहृतसत्यसच्चिदानन्दमात्रतया विदेहमुक्तोऽवशिष्यते ॥ २७ ॥ २८ ॥

अजं जन्माभावात् अमरं नाशाभावात् अनाद्यं स्वस्य कारणाभावात् आद्यं सर्वकारणत्वात् एकम् द्वितीयाभावात् पदं मुक्तिगम्यत्वात् अमलं मायिकमलाभावात् सकलं सर्वरूपत्वात् निष्कलञ्च निरवयवत्वात् ॥ एवं रूपेण यः स्थितः स विदेहमुक्तस्तदा निर्विशेषकालोत्तरक्षणेन नभःस्वरूपादाकाशादपि निर्मलः सन् स्वावशेषतयाऽवस्थातुमीश्वरः समर्थो भवतीत्यर्थः ॥ २९ ॥ ३० ॥

मायातत्कार्यकलङ्काभावाच्छुद्धोऽसौ स्वयं महात्मा पावने पवित्रे निर्मलात्मनि पदे ॥ विगलितनानाविधवासनं यथा भवति तथा महाम्बुधौ सलिलकण इव एकतां जगाम विदेहमुक्तिं गतवानित्यर्थः ॥ संशान्तदुःखम् आनन्दप्रचुरत्वात् अजडात्मकम् जडमायातत्कार्याभावात्

एकमुत्तमम् तुरीयातीतत्वात् त्यक्तरजस्तमोनिर्गुणत्वात् आनन्दमन्थरं स्वानन्दनिर्भरत्वात् यत् पदं महान्तः पूज्याः आकाशकोशतनवः

सलिलकण इवाम्बुधौ महात्मा विगलितवासनमेकतां जगाम ३२
संशान्तदुःखमजडात्मकमेकसुप्तमानन्दमन्थरमपेतरजस्तमोयत् ३३
आकाशकोशतनवोऽतनवोमहान्तस्तस्मिन्पदे गलितचित्तलवा
भवन्ति ॥ ३४ ॥
विदेहमुक्त एवासौ विद्यते निष्कलात्मकः ॥ ३५ ॥
समग्राग्र्यगुणाधारमपि सत्त्वं प्रलीयते ॥ ३६ ॥
विदेहमुक्तौ विमले पदे परमपावने ॥ ३७ ॥
विदेहमुक्तिविषये तस्मिन् सत्त्वक्षयात्मके ॥ ३८ ॥
चित्तनाशे विरूपाख्ये न किञ्चिदिह विद्यते ॥ ३९ ॥
न गुणा नागुणास्तत्र न श्रीर्नाश्रीर्न चैकता ॥ ४० ॥
जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः ॥ ४१ ॥
उपाधिनाशाद्ब्रह्मैव सन् ब्रह्माप्येति निर्द्वयम् ॥ ४२ ॥

---

जीवन्मुक्ता तस्मिन्पदे ब्रह्मणि गलितचित्तलवा लीनचित्ताः सन्त अतनवः अशरीरा विदेहमुक्ता भवन्तीत्यर्थः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

जीवन्मुक्त्यादिसमस्तश्रेष्ठगुणाधारभूतं सत्त्वगुणोऽपि यत्र प्रलीयते लयं गच्छति तदैवासौ निष्कलात्मकस्वरूपावस्थितो विदेहमुक्तो निर्विशेषब्रह्मात्मनावशिष्यते इत्यर्थः ॥ ३५ ॥ ३६ ॥

विमले परमपावने विदेहमुक्तौ पदे विरूपाभिधाने चित्तनाशे सत्त्वरूपगुणसाम्यक्षयसिद्धे तस्मिन् विदेहमुक्तिविषये विदेहमुक्तिस्वरूपे न गुणाः सत्त्वादिगुणा न सन्ति नाप्यगुणाः दोषा न सन्ति न श्रीर्विद्या नाश्रीरविद्या न ह्येकता तत्रास्ति किं बहुना इह विदेहमुक्तौ किञ्चिदपि न विद्यते विदेहमुक्तस्य निष्प्रतियोगिकस्वमात्रत्वादित्यर्थः ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

ब्रह्मातिरिक्तं न किञ्चिदस्तीति श्रुत्यर्थसंस्कर्ता ब्रह्मवित्तमः स्वकर्तव्यार्थाभावात् कृतार्थः स्वदेहाभिमानाभावात् सदा जीवन्नेव मुक्तो भवति ॥ स्वयं ब्रह्मैव सन् देहोपाधिनाशात् निर्द्वयं ब्रह्माप्येति ब्रह्मैव भवतीत्यर्थः ॥ ४१ ॥ ४२ ॥

शास्त्रेण नश्येत्परमार्थदृष्टिः कार्यक्षमं नश्यति चापरोक्षात् ॥४३॥
प्रारब्धनाशात्प्रतिभासनाश एवं त्रिधा नश्यति चात्ममाया ॥४४॥

अहिनिर्ल्वयिनीसर्पनिर्मुक्तो जीववर्जितः ॥ ४५ ॥
वल्मीके पतितस्तिष्ठेत्तं सर्पो नाभिमन्यते ॥ ४६ ॥
एवं स्थूलञ्च सूक्ष्मञ्च शरीरं नाभिमन्यते ॥ ४७ ॥
प्रत्यक् ज्ञानशिखिध्वस्ते मिथ्याज्ञाने सहेतुके ॥ ४८ ॥
नेतिनेतीति रूपत्वादशरीरो भवत्ययम् ॥ ४९ ॥
विश्वश्च तैजसश्चैव प्राज्ञश्चेति च ते त्रयः ॥ ५० ॥
विराड् हिरण्यगर्भश्च ईश्वरश्चेति च ते त्रयः ॥ ५१ ॥
ब्रह्माण्डं चैव पिण्डाण्डं लोका भूरादयः क्रमात् ॥ ५२ ॥
स्वस्वोपाधिलयादेव लीयन्ते प्रत्यगात्मनि ॥ ५३ ॥

---

वेदान्तशास्त्रश्रवणेन तत्प्रतिपाद्यस्य मनननिदिध्यासनाभ्यासाच्च पुनानुभूतसंस्कारगतपारमार्थिकसत्यत्वज्ञानं नश्येत् नश्यति ततः कार्यक्षमं उद्भूतव्यावहारिकसत्यत्वज्ञानमपरोक्षात्मज्ञानान्नश्यति पुनः प्रारब्धनाशात् प्रतिभासनाशः जगतः प्रातिभासिकत्वं नश्यति एवं त्रिधा चात्ममाया नश्यति विदेहमुक्तिर्भवतीत्यर्थः ॥ ४३ ॥ ४४ ॥

सर्पनिर्मुक्तः निर्मुक्ता जीववर्जितः वर्जिता अहिनिर्ल्वयिनी स्थावरत्वक् वल्मीके पतितः पतिता तिष्ठेत् लिङ्गव्यत्ययश्छान्दसः तां त्वचं यथा सर्पो नाभिमन्यते एवं तथा विद्वान् शरीरद्वयं नाभिमन्यते प्रत्यगभिन्नब्रह्मज्ञानाग्निना सहेतुके मिथ्याज्ञाने ध्वस्ते सति नेतिनेतीति रूपत्वादयमशरीरो विदेहमुक्तो भवतीत्यर्थः ॥४५॥४६॥४७॥४८॥४९॥

निर्विशेषज्ञानात् विश्वतैजसप्राज्ञैः साकं पिण्डाण्डसन्ततिः विराड् हिरण्यगर्भेश्वरैः सह भूरादिचतुर्दशलोकयुक्तब्रह्माण्डसन्ततिरपि स्वस्वोपाधिलयात् प्रत्यगभिन्ने ब्रह्मणि लयं भजते ततो विद्वान् विदेहमुक्तो भवतीत्यर्थः ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥

तूष्णीमेवस्थितस्तूष्णीं तूष्णीं सत्यं न किञ्चन॥ ५४ ॥
कालभेदं वस्तुभेदं देशभेदं स्वभेदकम् ॥ ५५ ॥
किञ्चिद्भेदं न तस्यास्ति किञ्चिद्वापि न विद्यते ॥ ५६ ॥
जीवेश्वरेति वाक् केति वेदशास्त्राः क हन्त्विति ॥ ५७ ॥
इदं चैतन्यमेवेति अहं चैतन्यमित्यपि ॥ ५८ ॥
इति निश्चयशून्यो यो वैदेहीमुक्त एव सः ॥ ५९ ॥
ब्रह्मभूतः प्रशान्तात्मा ब्रह्मानन्दमयः सुखी ॥ ६० ॥
स्वच्छरूपो महामौनी वैदेहीमुक्त एव सः ॥ ६१ ॥

---

ज्ञानी सर्वथा सङ्कोदासीनतया तूष्णीं तिष्ठति विज्ञानी ब्रह्मातिरिक्तं न किञ्चिदस्तीति अखण्डाकारवृत्त्या सर्वं विस्मृत्य तूष्णीं स्थितो भवति सम्यक्ज्ञानी तत्त्वज्ञानी वा निर्विकल्पसमाधिपरवशो भूत्वा तूष्णीं तिष्ठति तस्यास्ति नास्तीति विभ्रमोऽपि न कश्चिदस्ति विदेहकैवल्यस्य निष्प्रतियोगिकस्वमानत्वात् ॥ ५४ ॥

विदेहमुक्त्यावस्थायां भेदमित्यार्षः प्रयोगः भूतादिकालभेदः घटादिवस्तुभेदः भूर्लोकादिदेशभेदः नखकेशादिस्वगतभेदश्च ॥ इत्येवमादि किञ्चिद्भेदं कश्चिद्भेदो नास्ति तस्य ब्रह्मस्वरूपतया तद्व्यतिरिक्तं किञ्चिद्वापि न विद्यते ॥ ५५ ॥ ५६ ॥

अयं जीवोऽयमीश्वर इति भेदवचनं क्वास्ति ईश्वरेति सन्धिः छान्दसः चत्वारो वेदाः षड्शास्त्राणि क सन्ति शास्त्रा इति लिङ्गव्यत्ययश्छान्दसः अहमित्यतिवृत्तिः क्वास्ति ॥ परिदृश्यमानमिदं जगच्चैतन्यमेवेति वृत्तिः क्वास्ति देहत्रयातीततया अहञ्चैतन्यमित्यपि वृत्तिः क्वास्ति ॥ य एवं विधनिश्चयशून्यो मुनिर्भवति स एव ब्रह्मात्मना विद्यमानः वैदेहीमुक्त इत्यभिधीयते विगताश्च ते स्थूलादिदेहा इति विदेहास्त एव वैदेहास्ते अस्य सन्तीति वैदेही स एव मुक्तो विदेहमुक्त इत्यर्थः ॥ ५७ ॥ ५८ ॥ ५९ ॥

ब्रह्माहमिति ब्रह्मभावमापन्नो ब्रह्मभूतः उद्वेगजनकान्तःकरणाभावात्प्रशान्तात्मा ब्रह्मानन्दमयः सुखी आनन्दबहुलत्वात् ॥ स्वच्छरूपः गुणराहित्यात् इन्द्रियसमूहाभावात् महामौनी यो मुनिः स एव विदेहमुक्तः ॥ ६० ॥ ६१ ॥

ब्रह्मैवाहं चिदेवाहमेवं वापि न चिन्त्यते ॥ ६२ ॥
चिन्मात्रेणैव यस्तिष्ठेद्वैदेहीमुक्त एव सः ॥ ६३ ॥
चैतन्यमात्रसंसिद्धः स्वात्मारामः सुखासनः ॥ ६४ ॥
तुर्यतुर्यपरानन्दो वैदेहीमुक्त एव सः ॥ ६५ ॥
यस्य प्रपञ्चभानं न ब्रह्माकारमपीह न ॥ ६६ ॥
अतीतातीतभावो यो वैदेहीमुक्त एव सः ॥ ६७ ॥
चित्तवृत्तेरतीतो यश्चित्तवृत्त्यवभासकः ॥ ६८ ॥
सर्ववृत्तिविहीनात्मा वैदेहीमुक्त एव सः ॥ ६९ ॥
सर्वमात्माहमात्मास्मि परमात्मापरात्मकः ॥ ७० ॥
नित्यानन्दस्वरूपात्मा वैदेहीमुक्त एव सः ॥ ७१ ॥
जीवात्मा परमात्मेति चिन्तासर्वस्ववर्जितः ॥ ७२ ॥

---

ब्रह्माहं चिदहमिति यो न चिन्त्यते ॥ अपि च यश्चिन्मात्रेणैव तिष्ठेत् स विदेहमुक्त एव ॥ ६२ ॥ ६३ ॥

चैतन्यमात्रमवशिष्यते एवं रूपेण संसिद्धः स्वातिरिक्तरतिसम्बन्धाभावात्स्वात्मारामः सुखमात्रतयाऽवस्थितत्वात् सुखासनः ॥ तुरीयातीतावस्थामापन्नत्वात् तुर्यतुर्यः परानन्दश्च यो मुनिः स एव विदेहमुक्तः ॥ ६४ ॥ ६५ ॥

यस्य प्रपञ्चोऽस्ति नास्तीति न भाति तदाधारतयेह ब्रह्माकारवृत्तिरपि नोदेति ॥ यश्चातीतातीतभावः तुर्यातीतभावमापन्नः स विदेहमुक्त एव ॥ ६६ ॥ ६७ ॥

लोकचित्तवृत्तेरविषयः चित्तवृत्तिप्रकाशकस्वरूपः ॥ स्वयं सर्ववृत्तिविहीनः स एव विदेहमुक्तः ॥ ६८ ॥ ६९ ॥

स्वातिरिक्तसर्वसत्वे सर्वमात्मा तदन्तः पातित्वादहमप्यात्मास्मि स्वातिरिक्तसर्वाभावे परमात्मैवावशिष्ट इति यो मन्यते स परात्मकः नित्यानन्दस्वरूपात्मा विदेहमुक्त एव ॥ ७० ॥ ७१ ॥

अयं जीवः अयं परमात्मेति चिन्तारूपमूलधनवर्जितः सर्वसंकल्प

सर्वसङ्कल्पहीनात्मा वैदेही मुक्त एव सः ॥ ७३ ॥
आत्मज्ञेयादिहीनात्मा यत्किञ्चिदिदमात्मकः ॥ ७४ ॥
भावाभावविहीनात्मा वैदेहीमुक्त एव सः ॥ ७५ ॥
ओङ्कारवाच्यहीनात्मा सर्ववाच्यविवर्जितः ॥ ७६ ॥
अवस्थात्रयहीनात्मा वैदेहीमुक्त एव सः ॥ ७७ ॥

ओं तत्सदितिसाद्धान्तिकविदेहमहावाक्यानि महावाक्यरत्नावल्यां विंशप्रकरणे सप्तसप्ततिः ॥ आहत्यवाक्यान्यष्टोत्तरसहस्रम् ॥

---

रहितश्च यो भवति स विदेहमुक्त एव ॥ ७२ ॥ ७३ ॥

आत्मा ज्ञेयज्ञानज्ञातृस्वरूपहीनः अनिर्देश्यतया अनिदंस्वभावत्वाद्यत्किञ्चिदिदंरूपवान् ॥ स्वातिरिक्तप्रपञ्चभावाभावाभाववान् यः स विदेह मुक्त एव ॥ ७४ ॥ ७५ ॥

तुर्यातीतत्वादोङ्कारवाच्यविश्वविराडीशादिरूपवर्जितः ओङ्कारविकल्पितयदादिसर्ववाच्यविवर्जितः ॥ ७६ ॥

जाग्रदाद्यवस्थात्रयरहितो भवति यः स विदेहमुक्त एवेत्यर्थः यद्वा अवस्थात्रयहीनात्मा वैदेहीमुक्त एव सः यद्यपि पूर्वापरानुसन्धानसुकुमारबुद्धीनाम्व्याख्यभावावगमनपूर्वकतद्धारणासौकर्याय ग्रन्थविस्तारभिया च मया एतद्व्याख्यानं सङ्क्षेपेणैव कृतन्तथाप्यवस्थात्रयेति ग्रन्थान्तिमावयवभूतजीवन्मुक्तिवाक्यान्तिमवाक्यस्य वेदान्तमतसर्वस्वरूपाध्यारोपापवादयोर्निर्णायकत्वात् जिज्ञासूनामुपकृतये विस्तरेण व्याख्यानं क्रियते ॥ कस्तावदध्यारोपो नाम रज्जौ लोकस्य रज्ज्वज्ञानेन सूक्ष्मत्वादिक्रमनिष्पन्नसर्पवत् ब्रह्मणि ब्रह्माज्ञानेन अतस्मिंस्तद्बुद्धिरूपाध्यासेन ( मायया ) ईश्वरस्य अविद्याजीवस्य च सर्गक्रमनिष्पन्नस्थूलसूक्ष्मकारणप्रपञ्च इति अध्यारोपः ब्रह्माधिकृत्य आरोप्यत इति अध्यारोप- सोयमध्यारोपोवस्थात्रयमात्रविग्रहः यावदेवावस्थास्थितिरस्ति तावदेवाध्यारोपस्यापि स्थितिरस्तीतिभावः जाग्रत्स्वप्नसुषुप्तिभेदेनावस्थास्त्रिविधा यस्यामवस्थायाम्बाह्येन्द्रियैर्विषयोपलब्धिर्भवति सा जाग्रदवस्था यस्यामवस्थाया-

म्मनोमात्रवृत्तिभिरस्मिन् जन्मनि जन्मान्तरे वा जाग्रदवस्थानुभूतमनः
कल्पितविषयोपलब्धिर्भवति सा स्वप्नावस्था यस्यामवस्थायाम्बुद्धि-
सूक्ष्मवृत्तिभिरेवाज्ञानावृतसुखरूपात्मोपलब्धिर्भवति सा सुषुप्त्यवस्था
आस्ववस्थासु स्थूलसूक्ष्मकारणप्रपञ्चपदवाच्यतत्तच्छरीराणि तिष्ठन्ति-
सच्चिदानन्दाद्वयम्ब्रह्म अज्ञानं सदसद्विलक्षणं त्रिगुणमनिर्वचनीयं ज्ञान-
विरोधिभावरूप विशुद्धसत्त्वप्रधानमिदमज्ञानं समष्ट्यभिप्रायेण अजामे-
कामित्यादिश्रुतिसिद्धमेकम्मायापदवाच्यम् मलिनसत्त्वप्रधानमिदमज्ञानं
व्यष्ट्यभिप्रायेण इन्द्रोमायाभिरित्यादिश्रुतिसिद्धमविद्यापदवाच्यम्
सर्वज्ञत्व सर्वशक्तिमत्व परोक्षत्व नियन्तृत्वादिगुणक एष सर्वेश्वर इत्यादि-
श्रुतिसिद्ध ईश्वरः मायोपाधिरभिधीयते अल्पज्ञत्वाल्पशक्तिमत्वापरो-
क्षत्वनियम्यत्वादिगुणक आनन्दभुक् चेतोमुखः प्राज्ञ इति श्रुतिसिद्ध-
प्राज्ञपदवाच्यो जीवोऽविद्योपाधिरभिधीयते इदं समष्ट्यज्ञानमखिलका-
रणत्वादीश्वरस्य कारणशरीरमानन्दमयत्वात्कोशवदावरकत्वादानन्द-
मयकोशः स्थूलसूक्ष्मलयस्थानत्वात्सुषुप्तिरभिधीयते पुनरिदमज्ञान-
व्यष्ट्यभिप्रायेण जीवस्याहङ्कारादिकारणत्वात्कारणशरीरमानन्दमय-
त्वात्कोशवदावरकत्वादानन्दमयकोशः ईश्वरः स्वकीयविक्षेपशक्त्या लि-
ङ्गादिब्रह्माण्डान्तजगत्सृजति तथाच श्रुतिः "विक्षेपशक्तिर्लिङ्गादिब्रह्मा-
ण्डान्तञ्जगत्सृजेत्" इति तमःप्रधानविक्षेपशक्तिमदज्ञानोपहितेश्वरचैत-
न्यात्तमःप्रधानमपञ्चीकृतसूक्ष्मतन्मात्राभिधमाकाशादि भूतपञ्चकमु-
त्पद्यते तथाचश्रुतिः "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत" इति
एतेभ्योभूतेभ्यः सूक्ष्मशरीराणि स्थूलभूतानि च जायन्ते तत्र सूक्ष्मशरी-
राणि ज्ञानेन्द्रियपञ्चकबुद्धिमनःकर्मेन्द्रियपञ्चकवायुपञ्चकरूपसप्त-
दशावयवानि श्रोत्रादीनीन्द्रियाणि क्रमेणाकाशादिभूतपञ्चकव्यस्तसा-
त्त्विकांशजन्यानि अध्यवसायात्मिकान्तःकरणवृत्तिर्बुद्धिः सङ्कल्पवि-
कल्पकात्मान्तःकरणवृत्तिर्मनः अनयोरेवानुसंधानाभिमानात्मिकाऽन्तः-
करणवृत्तिरूपयोश्चित्ताहङ्कारयोरन्तर्भावो वेदितव्यः एतानि मन आ-
द्यन्तःकरणानि आकाशादिगतव्यस्तरजोंशजन्यानि प्राणादिवायवः
आकाशादिगतमिलितरजोंशजन्याः एतत्समष्टिसूक्ष्मोपाध्युपहितसूत्रा-
त्मचैतन्यस्य इयं समष्टिः स्थूलप्रपञ्चापेक्षया सूक्ष्मत्वात् सूक्ष्मशरीरं
विज्ञानमयादिकोशत्रयं जाग्रद्वासनामयत्वात्स्वप्नः अयमेव सूत्रात्मा
हिरण्यगर्भः प्राण इति चाभिधीयत एतद्व्यष्ट्युपहित तैजस चैतन्यस्या
पीयम्व्यष्टिः स्थूलशरीरापेक्षयात्सूक्ष्मत्वात् सूक्ष्मशरीरं विज्ञानमयादि-

कोशत्रयं आत्मह्रासनामयत्वात्स्वप्नः "द्विधा विधाय चैकैकं चतुर्धा प्रथ-
मम्पुनः। स्वस्वेतरद्वितीयांशैर्योजनात्पञ्च पञ्च ते" इति वाक्यानुसारेण
अपञ्चीकृतभूतपञ्चकम्पञ्चीकृतं सत् स्थूलतां याति तदा शब्दस्पर्श-
रूपरसगंधाः क्रमेणाकाशादीनां स्वकीया गुणाः स्वकीयगुणत्वे पञ्ची
कृतत्वात्परगुणसमन्वयात् शब्दस्पर्शवान् वायुः शब्दस्पर्शरूपवानग्निः
शब्दस्पर्शरूपरसवज्जलं शब्दस्पर्शरूपरसगन्धवती पृथ्वी अस्मात्पञ्ची-
कृतभूतपञ्चकात् महाण्डतदन्तर्गतचतुर्विधस्थूलशरीरतदन्नपानादी-
नि उत्पद्यन्ते एतच्चतुर्विधस्थूलशरीरसमष्ट्युपहितवैश्वानरचैतन्यस्य
इयं समष्टिः स्थूलशरीरम् अन्नविकारत्वादन्नमयकोशः स्थूलभोगायत-
नत्वाज्जाग्रदित्यभिधीयते एतद्व्यष्ट्युपहितविश्वचैतन्यस्यापीयम्व्यष्टिः
स्थूलशरीरम् अन्नविकारत्वादन्नमयकोशः स्थूलभोगायतनत्वाज्जाग्रदिति
एतावता ग्रन्थसन्दर्भेण अवस्थात्रयविग्रहरूपाध्यस्तप्रपञ्चो दर्शितः अव-
स्थात्रयावगाहकाः पञ्चकोशा इत्यपि दर्शितं कोशविविदिषाधतान्तद्बो-
धाय क्रमेण कोशाः प्रकाश्यन्ते आनन्दमयविज्ञानमयमनोमयप्राणमया-
न्नमया इति पञ्चकोशाः तत्र आनन्दमयकोशो नाम आनन्दविकारः
प्रियमोदप्रमोदवृत्तिमदज्ञानप्रधानमन्तःकरणम् प्रियमोदादिरहितमा-
त्मानन्तद्वन्तमिव कुर्वन्नाच्छादयतीवाच्छादयति विज्ञानमयकोशो नाम
बुद्धिविकारो ज्ञानेन्द्रियपञ्चकसहिता बुद्धिः कर्तृत्वाद्यभिमानरहितमा
त्मानं तद्वन्तमिव कुर्वन्नाच्छादयतीवाच्छादयति अयमेव कोशः अनामुत्र-
सञ्चारी व्यावहारिको जीव इत्यभिधीयते मनोमयकोशो नाम मनो-
विकारो ज्ञानेन्द्रियपञ्चकसहितम्मनः संशयशोकमोहादिरहितमात्मान-
न्तद्वन्तमिव कुर्वन्नाच्छादयतीवाच्छादयति प्राणमयकोशो नाम प्राण-
विकारः कर्मेन्द्रियपञ्चकसहिताः पञ्च वायवः क्षुत्पिपासागमनादि-
रहितमात्मानं तद्वन्तमिव कुर्वन्नाच्छादयतीवाच्छादयति अन्नमयकोशो
नाम अन्नविकारः मातृपितृभुक्तान्नसञ्जातशुक्लशोणितपरिणताकारः
प्रारब्धभोगायतनम् अपरिच्छिन्नं जन्मादिषड्भावविकाररहितं तापत्र-
यरहितमपरिच्छिन्नन्तत्तद्वन्तमिव कुर्वन्नाच्छादयतीवाच्छादयति प्रकृत-
मस्तूयते सकोशपञ्चकनिरुक्तस्थूलसूक्ष्मकारणशरीरत्रितयमेवावस्था-
त्रितयमिति स्पष्टन्निष्पादितम् अनयोः कारणव्यष्टिकारणसमष्ट्योः
सूक्ष्मव्यष्टिसूक्ष्मसमष्ट्योः स्थूलव्यष्टिस्थूलसमष्ट्योश्च क्रमेण वनवृक्ष-
योरिव जलाशयजलयोरिव चाभेदः अनयोः कारणव्यष्टिकारणसम-
ष्ट्युपहितयोरीश्वरप्राज्ञयोः सूक्ष्मव्यष्टिसूक्ष्मसमष्ट्युपहितयोः सूत्रात्म-

तैजसयोः स्थूलव्यष्टिस्थूलसमष्ट्युपहितयोर्विश्ववैश्वानरयोश्च क्रमेण घनवृत्ताकाशयोरिव जलाशयजलगतप्रतिबिम्बाकाशयोरिव चाभेदः यथा वनान्तरवनानां समष्टिरेकं महद्वनम्भवति यथा च अवान्तरजलाशयानां समष्टिरेको महाञ्जलाशयो भवति तथैतेषां समष्टिकारणसूक्ष्मस्थूलप्रपञ्चानां समष्टिरेको महान्प्रपञ्चो भवति यथावान्तरघनावच्छिन्नाकाशाः यथावान्तरजलाशयावच्छिन्नाः प्रतिबिम्बाकाशाश्च महाकाशो भवति तथा निरुक्तोपाध्युपहितेश्वरादिवैश्वानरपर्य्यन्तमभिन्नमेकमेव चैतन्यम्भवति आभ्यां महाप्रपञ्चतदुपहितचैतन्याभ्यामयःपिण्डवत् तादात्म्यसम्बन्धापन्नं चैतन्यं तत्त्वमस्यादिवाक्यानामवाच्यम् तादात्म्याध्यासरहितञ्च लक्ष्यम्भवति इदमेव "शिवं शान्तं चतुर्थम्मन्यन्त" इत्यादिश्रुतिसिद्धम् तुरीयचैतन्यम्भवतीति वेदितव्यम् वस्तुतः अवस्थात्रयराहित्यस्यैवापवाद इत्यभिधानम् तत्सत्त्वे तत्सत्त्वात तदसत्त्वे तदसत्त्वाच्च अपवादो नाम यथाक्रमेण स्वस्वकारणतः अनुलोमतया कार्य्यसर्गो भवति तथा क्रमेण विलोमतया स्वस्वकारणेषु प्रतिसर्गः प्रलय इत्यर्थः यथा रज्जुविवर्त्तस्य सर्पस्य अज्ञानाध्यस्तस्य ज्ञानोदयेन रज्जुभावेनावस्थानं तथा ब्रह्मविवर्त्तस्य जगतः अज्ञानाध्यस्तस्य ज्ञानोदयेन ब्रह्ममात्रत्वेनावस्थानमिति पर्यवसितोऽर्थः "स तत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः। अतत्त्वतोऽन्यथाप्रथा विवर्त्त इत्युदीरितः" इतिस्मृतेः जगत. ब्रह्ममात्रत्वेनावस्थाने न शङ्कावकाश इति बोध्यम् ॥

अथ प्रकृतवाक्यविवरणम् अवस्थात्रयहीनात्मा कारणसूक्ष्मस्थूलशरीरत्रयप्रभूतजाग्रत्स्वप्नसुषुप्त्यवस्थारहितस्स्वरूपः निष्प्रपञ्चाध्यासारोपापवादः निर्विशेषस्वस्वरूपकेवलब्रह्ममात्रास्मि इत्यर्थः य एवम्भूतो ज्ञानी स एव वैदेहीमुक्तः वैदेहीमुक्तो भवतीत्यर्थः विगतो देहो विदेहः स एव वैदेहः स विद्यते यस्यासौ वैदेही एवं रूपो मुक्तः संसाररूपबन्धनरहितस्तथोक्तः संसारो नाम कण्ठगतचामीकरविस्मृतिवन्नित्यप्राप्तस्वरूपविस्मृतिः स्वस्य रूपं स्वरूपं अत्रैकत्वेपि राहोश्शिर इतिवत् षष्ठी वेदितव्या किन्तावत्स्वस्य रूपं शुद्धचैतन्यं नित्यं ब्रह्म संसारिजीवसर्वज्ञत्वादिगुणकेश्वरयोस्तत्त्वमस्यादिवाक्यैर्विरुद्धांशपरित्यागेनाविरुद्धांशग्रहणेन चावशिष्टं विशुद्धमद्वैतसच्चिदानन्दमात्रं वस्तु देहाद्यात्मबुद्धिस्वरूपा आदिरहिता सान्ता अविद्यैव स्वरूपविस्मृतिरूपस्यास्य संसारस्य हेतुः सा हि कर्मानुगा ईश्वरानुशास्या भवति कर्म

नाम कायिकवाचनिकमानसव्यापारः फलभोगप्रदः तत्प्रारब्धसञ्चितक्रियमाणभेदेन त्रिविधं पूर्वशरीरसम्पादितविद्यमानशरीरोपभोग्यम्प्रारब्धम् पूर्वशरीरसम्पादितविद्यमानशरीराद्यनुपभोग्यं सञ्चितम् विद्यमानशरीरसम्पादितमुभयविधं क्रियमाणम् एतत्त्रिविधं कर्म नित्यनैमित्तिककाम्यनिषिद्धप्रायश्चित्तभेदेन पञ्चविधम् नित्यमकरणे प्रत्यवायसाधनं संध्यावन्दनादि नैमित्तिकं बुद्धिशुद्धिप्रयोजनं पुत्रजन्माद्यनुबन्धिजातेष्ट्यादि काम्यं स्वर्गादीष्टसाधनं ज्योतिष्टोमादि निषिद्धं नरकाद्यनिष्टसाधनम् ब्राह्मणहननादि प्रायश्चित्तं पापक्षयमात्रसाधनम् चान्द्रायणादि एतेषु कर्मसु किं किमुपादेयं किं किञ्च हेयमित्युच्यते नित्यं नैमित्तिकं काम्यमपि सात्त्विकं फलानपेक्ष्यं सति प्रत्यवाये प्रायश्चित्तञ्चोपादेयम् राजसं तामसं ऐहिकामुष्मिकफलापेक्ष्यं सात्त्विकमपि काम्यं निषिद्धञ्च हेयं पापानुत्पत्तिध्वंसहेतुकर्मणोः नित्यप्रायश्चित्तयोः फलानपेक्ष्यसात्त्विककाम्यकर्मणः बुद्धिशुद्धिहेतुनैमित्तिककर्मणश्च आम्नानात् वृद्धैस्स्वीकृतत्वात् उपादेयानि कर्माणि अन्तःकरणं शोधयन्ति ततः शुद्धान्तःकरणेन साधकेन दीर्घकालनैरन्तर्यशमादिसाधनाभ्यासेन ज्ञानमुत्पद्यते " न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुत " इतिभगवदुक्तेः "कषायपक्तिः कर्माणि" इति स्मृतेश्च जिज्ञासावतामज्ञानिनां निरुक्तकर्माण्यवश्यमनुष्ठेयानीति वेदितव्यम् शुद्धचेतसां न कर्मानुष्ठानमावश्यकम् "सन्तोषे त्वावश्यकमनावश्यकम्। शुद्धे चेतसि परितोषः" इत्यमृतोपदेशोक्तेस्तथात्वसिद्धिः लोके वेदे च कर्मकाण्डोपासनाकाण्डज्ञानकाण्डेति काण्डत्रितयप्रसिद्धिः तत्र कर्मकाण्डस्य चित्तशुद्धिप्रयोजनमुक्तम् उपासनायाः किं प्रयोजनमित्युच्यते कानि नामोपासनानि सगुणब्रह्मविषयकमानसव्यापाररूपाणि शाण्डिल्यविद्यादीनि तद्बहिरङ्गसाधनान्यपि उपासनाशब्देनैव व्यपदिश्यन्ते उपासनञ्चतुर्विधम् "सम्पदारोपसम्वर्गाध्यासा इति मनीषिभिः ।उपासाविधयस्तत्र चत्वारः परिकीर्तिताः" इति स्मृतेः एतेषां नित्यादीनां सर्वेषामपि बुद्धिशुद्धिः परमप्रयोजनम् उपासनानान्तु उपास्यनिष्ठचित्तैकाग्र्यम् नित्यादिकर्मणामुपासनानाञ्च पितृलोकदेवलोकप्राप्तिरवान्तरफलं वेदितव्यत् ,तथा च श्रुतिः "कर्मणा पितृलोको विद्यया ( उपासनया ) देवलोक" इति काम्यनिषिद्धकर्मणोः फलभोगरूपबन्धनहेतुत्वादननुष्ठानमेवावश्यम्विधेयम् " अनिष्टमिष्टं मिश्रञ्च त्रिविधं कर्मणः फलम् " इतिभगवदुक्तेः सर्व-

पां शुभाशुभकर्मणां फलभोगहेतुत्वात् संसारबन्धनहेतुत्वम् सिद्धम् अविद्यापि कर्मानुसरन्त्येवात्मनः स्वरूपं विस्मारयति संसारमुत्पादयतीत्यर्थः अतस्तानि प्रारब्धादिकर्माणि क्षेतव्यानि तानि केन क्षीयन्त इत्युच्यते ज्ञानेन तथाच भगवद्वाक्यम् " ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन " इति " तस्मिन् दृष्टे ( ज्ञाते ) परावरे " इति श्रुतिश्च " धर्मेण पापमपनुदति " इतिश्रुतिवचनात् कर्मणापि कर्म्मक्षयो भवतीत्युच्यते परन्तु कर्मणामात्यन्तिकक्षयस्तु ज्ञानेनैव भवति न तु कर्मणा निरुक्तश्रुतिस्तु कर्मणा कर्मणो नात्यन्तिकक्षयं प्रतिपादयति वक्ष्यमाणस्मृत्यनुरोधात् तथाच स्मृतिः " कर्मणा कर्मनिर्हारो नह्यात्यन्तिक इष्यते। अविद्वदधिकारित्वात्प्रायश्चित्तस्विमर्शनम्" इति अविद्या केन हन्यत इत्युच्यते धियया ज्ञानेनेत्यर्थः तथा च स्मृतिः " विद्याऽविद्यां निहन्त्येव तेजस्तिमिरसंघवत् " इति एवं ज्ञानेन कर्मनिवृत्तिस्तथाऽविद्यानिवृत्तिश्च दर्शिता संसारस्य कर्मानुगाविद्यामूलत्वात् ज्ञानेन संसारनिवृत्तिर्मुक्तिर्भवतीति सिद्धम् केचिद्भट्टैकदेशिनः प्राभाकराश्च निष्कामकर्मैव मुक्तिसाधनं वदन्ति अन्ये भर्तृप्रपञ्चभास्करप्रभृतयः कर्मचोपासनञ्च समुच्चितम् मुक्तिसाधनं वदन्ति निरुक्तैकदेशिनस्तु ज्ञानकर्मोभयं मुक्तिसाधनम्वदन्ति परन्तु एते आचार्य्याः स्वाभिरेव बुद्धिभिः गूढार्थोपनिबद्धवेदार्थमुत्प्रेक्षमाणा भवन्ति न तु तत्त्वार्थन्दर्शयन्ति वस्तुतस्तु ज्ञानमेव कर्मादिनिरपेक्षं मोक्षसाधनम्भवति तथाच कैवल्योपनिषदा स्पष्टं श्राव्यते " ज्ञात्वा तम्मृत्युमत्येति नान्यःपन्था विमुक्तय" इति तथाच स्मर्यतेपि "ज्ञानादेवामृतत्वन्नहिशक्यधूःसिद्धपोतम्प्रसूत" इति यथा रज्जुविवर्तः सर्पः रज्जुज्ञानम्विना मन्त्रौषधाद्यैर्नास्तंव्रजति तथा ब्रह्मविवर्त्तः संसारो ब्रह्मज्ञानम्विना कर्मोपासनैर्न विरमतीति वेदितव्यम् तानि कर्मोपासनानि चित्तशुद्धिहेतुत्वान्मोक्षं परम्परया साधयन्ति ज्ञानन्तु साक्षादेव मोक्षं साधयतीति निर्गलितः सिद्धान्तः कानि नाम ज्ञानसाधनानि अस्मिञ्जन्मनि जन्मान्तरे वा वेदवेदाङ्गाध्ययनम् प्रथमं साधनम् ततः ब्रह्मैव नित्यवस्तु तदन्यत् सकलं दृश्यजातमनित्यम्वस्त्विति नित्यानित्यवस्तुविचारः साधनम् ततोऽनित्यत्वादिदोषदृष्ट्या ऐहिकानां स्रक्चन्दनादिविषयाणामामुष्मिकाणां नन्दनवनविहाररम्भारमणादिविषयाणां फलभोगानां वैरस्यमिहामुत्रार्थफलभोगविरागस्साधनम् ततोमनोनिग्रहबाह्येन्द्रियनिग्रहविधिना विहितकर्मपरित्यागशीतोष्णादिद्वन्द्वसहिष्णुता तदयविषय-

चित्तैकतानता गुरुवेदान्तवाक्यविश्वासरूपाणि सम्पत्तिपदवाच्यानि शमदमोपरतितितिक्षासमाधानश्रद्धाख्यानि साधनानि ततोऽस्मादपारात्संसाराद्दुःखबहुलात्कथम्मे मोक्षः स्यात्कदा मे मोक्षः स्यादिति तीव्रेच्छात्मकमुमुक्षुत्वं साधनम् ततः श्रवणमनननिदिध्यासनसमाधिसाधनानि नितरामपेक्षितानि श्रवणन्नाम षड्विधलिङ्गैः सकलवेदान्तवाक्यानामद्वयब्रह्मणि "उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" इत्युक्तप्रकारेण तात्पर्यावधारणम् प्रकरणप्रतिपाद्यस्यार्थस्य आद्यन्तयोरेव प्रतिपादनमुपक्रमोपसंहारौ प्रथमं लिङ्गम् प्रकरणप्रतिपाद्यस्यार्थस्य तन्मध्ये पौनःपुन्येन प्रतिपादनमभ्यासः प्रकरणप्रतिपाद्यस्यार्थस्य प्रमाणान्तरेण विषयीकरणमपूर्वता प्रकरणप्रतिपाद्यस्यार्थस्य तदनुष्ठानस्य वा तत्र तत्र श्रूयमाणं प्रयोजनं फलम् प्रकरणप्रतिपाद्यस्यार्थस्य तत्र तत्र श्रूयमाणा प्रशंसा अर्थवादः प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिरुपपत्तिः मननन्तु श्रुतस्याद्वयब्रह्मणः वेदान्ताविरोधियुक्तिभिर्निरन्तरमनुचिन्तनम् निदिध्यासनम् विजातीयदेहाद्यहन्तापर्यन्तजडवस्तुविषयकप्रत्ययनिरोधपूर्वकसजातीयाद्वितीयब्रह्मविषयकप्रत्ययप्रवाहीकरणम् व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावयोश्चित्तस्यैकाग्रता परिणामः समाधिः स च विकल्पसहितः सविकल्पकः निर्विकल्पकस्तु चित्तस्य निरोधपरिणामः विकल्परहित इति वेदितव्यम् अत्र समाधिशब्देन योगो गृह्यते तथाच स्मृतिः "अयमेव परो धर्मो यद्योगेनात्मदर्शनम् । तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति" इति "सलिले सैन्धवं यद्वत्साम्यम्भजति योगतः । तथात्ममनसोरैक्यम् ( योगत इति शेषः ) समाधिरभिधीयते । योगो मय्येकचित्तता इत्यादिश्रुतिस्मृतिवाक्यानि प्रकृतार्थं पोषयन्तीति वेदितव्यम् लोके शास्त्रे च हठराजभेदेन योगो द्विविधः प्रसिद्धः तत्र राजयोगरूपसौधारोहणाय हठयोगरूपिणी निःश्रेणिकाऽपेक्षिता भवति साधनसिद्धिरूपौ तावुभौ हठयोगराजयोगौ वेदितव्यौ सिद्ध्यमानौ ;साधनाभ्यासो निष्फलः साधनम्विना सिद्धिप्राप्तिरसंभवा भवति अत एव "हठम्विना राजयोगो राजयोगम्विना हठः" इति स्वात्मारामोक्तिः संगच्छते एतावता ग्रन्थसंदर्भेण ज्ञानात्सकलप्रपञ्चप्रलयपूर्वकस्वस्वरूपमहात्मना संस्थितिरूपा मुक्तिर्भवतीति सूचितम् तच्च ज्ञानम् अन्तःकरणशोधनोपयोगिव्यापारपूर्वकश्रवणादिभिर्भवतीति च जीवन्मुक्तिविदेहमुक्ति-

भेदेन द्विविधा मुक्तिः श्रुतिस्मृतिभ्यामुपदिश्यते तत्र तयोः प्रकारयोः किम्वैलक्षण्यमित्युच्यते प्रारब्धसत्वे देहाद्यहन्ताद्यभिमानराहित्य-पूर्वकनिर्विशेषकेवलब्रह्मात्मना स्थितिः प्राक्प्रवृत्तकुलालचक्रभ्रमणमिव प्रारब्धप्रवृत्तशरीरयात्रानुकूलप्रवृत्तिमती जीवन्मुक्तिः प्रारब्धावसाने स्वकल्पितसकलप्रपञ्चविरूपनाशपूर्वकनिर्विशेषकेवलब्रह्मात्मना स्थितिः विदेहमुक्तिः निरुक्तरीत्या अनयोर्मुक्त्योर्वैलक्षण्यम् वेदितव्यम् निरस्तसकलावस्थो,विदेहमुक्तो भवति कैवल्यम्प्राप्नोतीति प्रकृतवाक्यस्य सारभूतोऽर्थः ॥ ७७ ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतायाम्महावाक्यरत्नावलिटीकायाम्प्रभाभिधानायाम्विदेहमुक्तिवाक्यविवरणं सम्पूर्णम् ॥

## आहत्यवाक्यानि अष्टोत्तरसहस्रम् ॥ १००८ ॥



# उपसंहारः ।

विध्यङ्घ्रिर्बन्धमुग्गुल्फो ह्यविद्वद्धेयजङ्घकः ॥
जगन्मिथ्याजानुदेशस्तूपदेशोरुदेशकः ॥ १ ॥
ब्रह्मात्मैक्यकटीदेशो विद्वन्मनननाभिकः ॥
जीवन्मुक्त्याख्यदहरः स्वानुभूतिकरद्वयः ॥ २ ॥
स्वसमाधिस्कन्धदेशः स्वस्वरूपाख्यकन्धरः ॥
फलभूतमहावाक्यफलो वैदेहमस्तकः ॥ ३ ॥
एवं विध्यादिदेहान्तमहावाक्यकलेवरः ॥
वस्तुतो निर्विशेषात्मा त्रिपान्नारायणोस्म्यहम् ॥ ४ ॥
यन्महावाक्यसिद्धान्तम् मुक्तचित्तैकगोचरम् ॥

---

विधिवाक्यानि अङ्घ्री यस्य स तथोक्तः बन्धमुक्बन्धमोक्षवाक्यानि गुल्फौ चरणग्रन्थी यस्य स तथोक्तः अविद्वान् हेयो यैर्वाक्यैस्तानि अविद्वद्धेयवाक्यानि जङ्घे यस्य स तथोक्तः जगन्मिथ्यावाक्यानि जानुदेशो यस्य स तथोक्तः उपदेशवाक्यानि उरुदेशो यस्य स तथोक्तः ब्रह्मात्मैक्यवाक्यानि जीवब्रह्मैक्यवाक्यानि कटीदेशो यस्य स तथोक्तः विद्वन्मननवाक्यानि नाभिर्यस्य स तथोक्तः जीवन्मुक्त्याख्यानि जीवन्मुक्तिवाक्यानि देहरं हृदयं यस्य स तथोक्तः स्वानुभूतिवाक्यानि करद्वयं यस्य स तथोक्तः स्वसमाधयः समाधिवाक्यानि स्कन्धदेशो यस्य स तथोक्तः स्वस्वरूपाख्यानि नामलिङ्गस्वरूपवाक्यानि कन्धरा यस्य स तथोक्तः फलभूतमहावाक्यानि फलं यस्य स तथोक्तः वैदेहः विदेहमुक्तिः मस्तकं यस्य स तथोक्तः एवं विध्यादिविदेहान्तमहावाक्यं कलेवरं शरीरं यस्य स तथोक्तः वस्तुतो निर्विशेषात्मा " त्रिपादस्यामृतं दिवीति " श्रुतिसिद्धत्रिपाद्रूपनारायणोस्मीति ज्ञानसमकालं विदेहमुक्तो भवतीत्यर्थः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

यन्मह· महावाक्यसिद्धान्तभूतम् जीवन्मुक्तचित्तमात्रविषयीभूतं तत्सर्वात्मक मह· वासुदेवेन्द्रसञ्ज्ञं नौमि एतद्ग्रन्थस्य सङ्ग्रहीतुः

वासुदेवेन्द्रसंज्ञन्तन्नौमि सर्वात्मकं महः ॥ ५ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यवासुदेवेन्द्रसरस्वतीचरणकमल-
मकरन्दवृतस्वान्तरामचन्द्रेन्द्रग्रथितेशाद्यष्टोत्तरशतोपनिषत्सार-
संग्रहभूताष्टोत्तरसहस्रमहावाक्यरत्नावलिः परिपूर्णा॥

वासुदेवेन्द्रनामा कश्चित्पूज्यो गुरुरासीत् तं ब्रह्मरूपत्वेनास्तौत् ग्रन्थकृत् ॥ ५ ॥

इति मैथिलश्रीत्रिलोकनाथमिश्रप्रणीतेशाद्यष्टोत्तरशतोपनिषत्सारसंग्रहभूताष्टोत्तरसहस्रमहावाक्यरत्नावल्याः प्रभाभिधानटीका सम्पूर्णा सिद्धिरस्तु ॥

त्रिलोकनाथमिश्रोऽहम्मैथिलो गुरुसेवकः ॥
चनौरग्रामवास्तव्योऽर्पयाम्येताङ्कृतिङ्गुरौ ॥ १ ॥
सज्जनास्सन्तु सन्तुष्टा यनेनानेन भावुकाः ॥
तुष्यन्तु वा न तुष्यन्तु दुष्टा यत्नो न तान्प्रति॥ २ ॥

# भूमिका ।

यदासीत्कदाचिदयञ्जनस्संसारतमसावृतस्तदा मद्गुरव उज्यान-(उजान)ग्रामवास्तव्या ज्ञानवाक्पतयः परमकारुणिका अपरविदेह-मूर्त्तयो महात्मानः श्रोपाधमैथिलश्रीसत्यनारायणशर्म्माणः करुणा-योपदेशपञ्चदशीनाम पुस्तकमिदन्निर्म्माय मदन्तिके वाराणस्याम् प्रेषितवन्तः तदहं सादरमवलोक्य "भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्व्वसंशयाः" इत्युक्तरीत्या परां शान्तिमुपगतोस्मि युक्तमेवैतत् कुतः गुरूणाङ्करुणामसृणकटाक्षपातम्बिना कस्संसारतमो निवर्त्त-यितुमलं स्यात् सन्ति यद्यपि बहूनि करुणारसार्द्रचेतसान्तपोध-नानाङ्कल्पान्तःस्थायियशःशरीराणामुपदेशवाक्यानि तथापि तेषा-मल्पबुद्धिदुरधिगम्यतयाल्पप्रचारतया सर्व्वजनादृष्टचराश्रुतपूर्व्व-तया च तेभ्यो वाक्येभ्यः सर्व्वजनानसम्यगुपकृतान् वीक्ष्य तेषां समुपकाराय गुरुकृपोपलब्धस्यास्योपदेशपञ्चदशीवाक्यस्य मुद्रा-पणे मतिरुदिता ततो गुरुशुश्रूषुणा नैष्ठिकेन ब्रह्मचारिणा मन्मि-त्रेण श्रीबलभद्रदासमहात्मना टीकां कारितवानस्मि अथाहम्महा-वाक्यरत्नावल्याः प्रभानाम्नीं टीकां विरच्यैतदुभयग्रन्थयोरेक-त्रमाप्तिसौकर्य्याय अनयैव साकमिमामुपदेशपञ्चदशीमपि मुद्रणाय समवेतां करोमि इदानीं सहृदयानां विदुषां समीपे इयमेवास्माकम्प्रा-र्थना यथा सरसकाव्यालङ्कारादिषु करुणाकटाक्षो निपतति तथा अस्मिन्नपि ग्रन्थे निपततु ।

इत्यावेदति

मैथिलश्रीत्रिलोकनाथमिश्रः

॥ श्रीः ॥

# अथोपदेशपञ्चदशी ।

अहो लोका यूयं किमिह वितथे विश्वविषये
वृथा सत्त्वं मत्वा सततमनुरक्ता हतधियः ।
पिता माता भ्राता तनयतनयाद्याः परिजनाः
क्व याता विश्लेषोऽपि न मनसि येषामनुमितः ॥१॥

**हे लोका यूयं हतधियः(सन्तः)इह(अस्मिन्) वितथे विश्वविषये वृथा सत्त्वं मत्वा समतं किम् ( किमर्थम् ) अनुरक्ताः ( भवथ ) अहो ( इत्याश्चर्य्यम् ) पिता माता भ्राता तनयतनयाद्याः परिजनाः क्व याताः येषां विश्लेषो मनस्यपि नानुमितः ॥ १ ॥**

हेलोकाः हेजनाः यूयं हतधियः हता नष्टा धीः विवेकबुद्धिर्येषान्ते सन्तः इहास्मिन् वितथे मिथ्याभूते विश्वविषये सर्वविषये संसारे वा वृथा मत्यस्ततो मुधा सत्त्वं जगतां सत्तां मत्वा ज्ञात्वा सततं निरन्तरं किं किमर्थमनुरक्ता अनुरागिणो भवथ अहो इत्याश्चर्य्यम् इति खेदपूर्व्वकपृच्छा गुरुजनानाम् अतः परमनुरागविषयाणां जगतामसारतां दर्शयन्त आहुः पितेति-पिता जनको माता जनयित्री भ्राता सहोदरः तनयतनयाद्याः तनोतिकुलंतन्यतेवा तनयः पुत्र आत्मजस्तनय इत्यमरः तनया कन्या सा आद्या आदिर्येषान्ते तनयाद्या दौहित्रादयः तनयश्च तनयाद्याश्चेति तनयतनयाद्याः तद्रूपाः परिजनाः कुटुम्बाः पूर्व्वोक्ताः पित्रादयश्च क्व याता कुत्र गताः येषां

पित्रादीनां विश्लेषो वियोगो मनसि हृदयेऽपि नानुमितः नानुमानविषयोऽभवत्त्यक्तस्य तु कथैव केत्यर्थः । अथवा तनयश्च तनया चेति तनयौ पुनः तनयश्च तनयाचेति तनयौ तयोः पुत्रदुहित्रोः तनयौ पौत्रदौहित्रौ इति तनयतनयौ तौ आद्यौ येषां ते तनयतनयाद्याः पौत्रदौहित्रप्रभृतयः परिजनाः । अथवा तनयेन सहिता तनयसहिता सा चासौ तनयाचेति तनयतनया " शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् " इत्यनेन सहितपदस्य लोपः । सा आद्या येषां ते तनयतनयाद्याः पौत्रदौहित्रादिरूपपरिजनाः तद्गुणसंविज्ञानबहुव्रीहित्वात्पुत्रदुहितृपौत्रदौहित्रादिरूपपरिजनाः ग्राह्याः ॥ १ ॥

यदुत्पन्नं वित्तं कृतविविधयत्नैरविहितैः
समुत्सृज्य प्राणानपि वदत तद्वः किमभवत् ।
शरीरं स्वाद्वन्नैर्यदिह परिपुष्टं प्रतिदिनं
तदेतत्सम्भाव्यं कृमिशमलभस्माख्यमधुना ॥ २ ॥

हे जना युष्माभिः प्राणानपि समुत्सृज्य अविहितैः कृतविविधयत्नैर्यद्वित्तं धनमुत्पन्नम् ( उत्पादितम् ) वो युष्माकं तद्वित्तं किमभवत् ( इति प्रश्नः तदुत्तरं ) वदत । इहास्मिन् संसारे स्वाद्वन्नैर्यच्छरीरं प्रतिदिनं परिपुष्टम् अधुना मृत्यनन्तरम् तदेतच्छरीरं कृमिशमलभस्माख्यं सम्भाव्यमित्यन्वयः ॥ २ ॥

हे जना युष्माभिः प्राणानपि समुत्सृज्य अतिश्रमं कृत्वेत्यर्थः अविहितैः व्यदधायिषतेति विहिता न विहिता अविहितास्तैः शास्त्रनिषिद्धैरित्यर्थः कृतविविधयत्नैः विविधा नानारूपाः ते च यत्ना उद्यमाश्चेति विविधयत्नाः अकृषतेति कृता अनुष्ठिताः ते च विविधय-

स्तारश्चेति कृतविविधयत्नास्तैः स्वसम्पादितानेकविधोद्यमैरित्यर्थः यद्वित्तं धनम् उत्पन्नम् उत्पादितम् पद इत्यस्यान्तर्गर्भितण्यर्थत्वादुक्तार्थ एव समीचीनः। वो युष्माकं तद्वित्तं लब्धं धनं किमभवत् क्व गतमितिप्रश्नः तदुत्तरं वदत कथयत यूयमितिशेषः। इहास्मिन् संसारे स्वाद्वन्नैरिष्टान्नैर्यच्छरीरं वपुः प्रतिदिनं प्रतिवासरं परिपुष्टं पर्य्यपोषि युष्माभिरितिशेषः अधुना मृत्युनन्तरम् तदेतच्छरीरं पूर्व्वपरिपोषितकलेवरं क्रमिशमलभस्माख्यं कृमयश्च शमलानि पुरीषाणि च भस्मानि चेति कृमिशमलभस्मानि तानि आख्यानि लोके प्रकथनानि यस्य तत् सम्भाव्यम् अर्थात् खाते प्रक्षिप्तं शरीरं विशीर्णत्वेन कृमित्वमुपगतम्भवति जम्बुकादिभिः भक्षितं शरीरं जठराग्निपरिपक्वत्वेन शमलत्वं सम्पद्यते वह्निना दग्धं शरीरं भस्मसंज्ञकत्वं च लभते तथैव स्वाद्वन्नैः परिपुष्टं भवतां वपुः कृम्यादिरूपेण परिणंस्यति तत्कथं सकलभाववर्जितनिर्म्मलमात्मानं स्वस्वरूपं विस्मृत्य विनश्वरशरीरं परिपोषितुमहोरात्रं यापयन्तीतिभावः एतेन यतमानाख्यवैराग्यम् उपदिष्टं भवतीति ज्ञातव्यं तत्प्रकारोऽग्रे वक्ष्यामः ॥ २ ॥

गता बालावस्था गतमपि च तारुण्यमचिरात्
समायातं हन्त स्थविरवय आगन्तुकमृति ।
तथाप्यन्तश्चेतस्यहह नहि युष्माकमधुना
महाकालव्यालग्रसनभयमायाति किमिति ॥ ३ ॥

( हे जना ) बालाऽवस्था गता अचिरात् तारुण्यमपि गतम् आगन्तुकमृति स्थविरवयः समायातं हन्त ( इतिखेदः ) तथापि ( वार्द्धक्ये समायातेऽपि ) अधुना युष्माकम् अन्तश्चेतसि महाकालव्यालग्रसनभयं नहि

आयाति इति किम् अहह इत्यद्भुतम् महामोहस्य महात्म्यम् ॥ ३ ॥

हे जना बालावस्था बालानां शिशूनामवस्था वय इति बालअस्था प्रथमावस्था गता व्यतीता तारुण्ये यौवने कामाद्यनुसंन्धानबाहुल्यात् कालस्याननुसन्धानात् चिराद्व्यतीतोऽपि कालः अचिरव्यतीत इव भाति ततोऽत्राचिरादितिप्रयोगः अचिरादविलम्बेन तारुण्यं तरुणस्य यूनो भावस्तारुण्यं यौवनावस्थाऽपि गतं व्यतीतम् आगन्तुकमृति आगन्तुका आगमिष्यती मृतिर्म्मरणं यस्मिन् तत् स्थविरवयः स्थविराणां वृद्धानां वय इति स्थविरवयः जरावस्था समायातं समुपस्थितं हन्त इतिखेदः खेदस्यविषयोऽयम् यदवस्थात्रयं गतम् अकार्य्यकं चतुर्थं वयः समागतं "चतुर्थे किं करिष्यति" इतिस्मृतेः तथापि वार्द्धक्ये समायातेऽपि अधुना परलोकसाधकधनवितरणदेवताचिन्तनादिसत्कर्म्माचरणसमये युष्माकम् अन्तश्चेतसि अन्तःकरणे महाकालव्यालग्रसनभयम् महांश्चासौ कालः कृतान्तश्चेति महाकालः स एव व्यालः सर्प्प इति महाकालव्यालः तस्य ग्रसनमशनमिति महाकालव्यालग्रसनं तस्माद् भयं भीतिस्तन्नहि आयाति किमिति इतिकिम् इत्युपदेष्टॄणां शरणगतान् प्रति प्रश्नः तदनन्तरम् अहह इत्यद्भुतं महामोहस्य माहात्म्यमितिस्वस्वान्ते अनुसंदधतीतिभावः ॥ ३ ॥

दुरन्तप्रत्याशावधिमिह किमेकोऽपि गतवान्
विना रागाभावं विषयरसलुब्धः कथमपि ।
समालोच्यैतद्भोस्त्यजत विषयाशां क्षणिकतां
तनोर्ज्ञात्वा शम्भुं शरणमुपयात द्रुततरम् ॥ ४ ॥

**भो लोका इहास्मिन् संसारे रागाभावं विना विषयरसलुब्ध एकोऽपि (जनः) कथमपि दुरन्तप्रत्याशावधिं किं गतवान् ( न गतवान् इत्यर्थः ) एतत् ( दुरन्तप्रत्याशावधेरप्राप्तिं ) समालोच्य विषयाशां ( संसारिकसुखलिप्सां ) त्यजत ( त्यागं कुरुत ( तनोःक्षणिकतां ज्ञात्वा द्रुततरं शरणं (रक्षकं ) शम्भुमुपयात ( उपगच्छत) ॥४॥**

भोलोका इहास्मिन् संसारे रागाभावं रञ्जनं रागः प्रीतिः वैषयिकानुरागस्तस्याभाव इति रागाभावस्तं विना विषयरसलुब्धः विशेषेण सीयन्ते बध्यन्ते जना यैस्ते विषयाः शब्दादयः ऐहिकसुखसाधकाः तेषां रसो विषयानुरागस्तृष्णा वा तेन लुब्धो विमोहितः इति विषयरसलुब्धः एकोऽपि कश्चिदपि जनः कथमपि केनापि प्रकारेण दुरन्तप्रत्याशाऽवधिं दुःखेन अन्तमवसानं यस्याः सा दुरन्ता सा चासौ प्रत्याशा विषयप्रतीक्षा चेति दुरन्तप्रत्याशा तस्या अवधिरन्तः इति दुरन्तप्रत्याशाऽवधिस्तं किं गतवान् न कोऽपि गतवानित्यर्थः एतत् ( दुरन्तप्रत्याशावधेरप्राप्तिं जनानाम् ) समालोच्य विचार्य विषयाशां सांसारिकसुखलिप्सां त्यजत त्यागं कुरुत तनोः शरीरस्य क्षणिकतां क्षणेभवः क्षणिकस्तस्य भावः क्षणिकता तामल्पकालस्थायित्वं ज्ञात्वा विचारविषयं कृत्वा द्रुततरम् अतिशीघ्रं शरणं रक्षकं "शरणं गृहरक्षित्रोः" इत्यमरः, शम्भुं ब्रह्म त्रिलोचनं वोपयात कायेन वाचा मनसा तत्सामीप्यं सेवध्वमित्यर्थः "शम्भूर्ब्रह्मत्रिलोचनौ" इत्यमरः। शरीरक्षणिकतावगमात् संसारवैरस्यं भजतां भवतां प्रत्याशात्यागपूर्वकं द्रुततरं शम्भुशरणोपगमनमेवोचितमितिभावः एतदावश्यककृतिसमाप्त्यनन्तरम् परलोकाय यतिष्यामहे इति बुद्धिं शरीराचिरस्थायित्वावगमात् परिहृत्य शीघ्रं शिवः सेव्य इतितात्पर्य्यम् ॥४॥

उपास्तिर्युष्माभिः किमिह निरपेक्षस्य क्रियते
कलत्रादेर्मूढा मुहुरनुभवद्भिः परिभवान् ।
अरेभक्तापेक्षं कृपणजनवन्धुं सकरुणम्
शिवं शान्ताकारं शरणमुपयात द्रुततरम् ॥ ५ ॥

हे मूढाः मुहुः ( वारं वारम् ) परिभवान् अनुभवद्भि-र्युष्माभिर्निरपेक्षस्य कलत्रादेरुपास्तिरुपासना किं क्रियते कथं विधीयते अरे ( नीचा ) द्रुततरम् भक्तापेक्षं कृपण-जनवन्धुं सकरुणं शान्ताकारं शरणं शिवमुपयात यूयमितिशेषः ॥ ५ ॥

हे मूढाः बुद्धिहीना इतिसम्बोधनेन उपदेष्टृभिः शिष्यस्य विचारहीनतयैवावज्ञा सूच्यते मुहुः वारंवारं परिभवाननादरान् अनुभवद्भिरनुभवं कुर्वद्भिर्युष्माभिर्निरपेक्षस्य निर्गता अपेक्षा यस्मात्स निरपेक्षस्तस्य कलत्रादेः कलत्रं भार्या आदिर्यस्य स कलत्रादिः परिजनस्तस्य उपास्तिरुपासना सेवा किं क्रियते कथं विधीयते अथवा कलत्रं भार्या आदिरादिकारणं यस्य संसारस्य स तस्य । वारंवारम् दीयमानमुपदेशमगृह्णन्तं शिष्यम्प्रति कारुण्यात् गुरुभिः अरे इति नीचसम्बोधनेनाभि-मुखीकृत्य परमकल्याणरूपहितवाक्यमुपदिश्यतेअरेनीचा यूयमति-द्रुततरमतिशीघ्रं भक्तापेक्षं भक्तानपेक्षते यः स भक्तापेक्षस्तं भक्ता-नुरोधेन सगुणत्वपुत्रत्वादिभजमानमित्यर्थः कृपणजनवन्धुं कृपणा दीनास्ते च जनाश्चेति कृपणजनाः तान् स्नेहेन बध्नातीति कृपणजनवन्धुस्तं सकरुणं करुणा दया तया सहितः सकरु-णस्तं शान्ताकारं शान्तः आकारः आकृतिर्यस्य सम् भक्तानां सकलासुविधानिरसनार्थं स्वाभाविकातिशयसौन्दर्यसौशील्यसौहा-

देवात्सन्यकारुण्यमाधुर्यगाम्भीर्यौदार्य्यशौर्य्यवीर्यपराक्रमसर्वज्ञत्वसत्यकामत्वसत्यसङ्कल्पत्वसकलकारणत्वाद्यसंख्येयकल्याणगुणसागरत्वेन धृतमनोहरवेषमित्यर्थः तथाचोक्तं भगवता गीतायां चतुर्थाध्याये "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्म्मसंस्थापनार्थाय सम्भवामि युगे युगे " इत्यादिना सम्भवनात् प्राक् निराकारत्वमेव प्रतीयते सम्भवनन्तु स्वेच्छाधीनं " प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया " इति भगवदुक्तेः अत एव शरणं वैदिकमार्गानुयायिनां स्वस्वरूपपरिचयप्रदानेन रक्षितार नान्येषां वेदविरुद्धमार्गप्रवणानाम् आसुरसम्पत्तिप्रसक्तानाम् " निवन्धायासुरीमता"इतिभगवदुक्तेः शिवमुमापतिमथवा निराकारं ब्रह्मोपपयात ॥ ५ ॥

धनं मे धान्यं मे शयनमशनं मे परिजनः
कुलं मे कौलं मे कृतमिति लपन्तं बहुविधम् ।
अकस्मादायातोऽनवहितजनं कालपुरुषः
शरीरादाकर्षत्यकरुणतरस्त्रस्तहृदयम् ॥ ६ ॥

अकस्मादायातः अकरुणतर कालपुरुषः ( इदम् ) मे धनम् ( इदम् ) मे धान्यम् ( इदम् ) मे शयनम् ( इदम् ) मे अशनम् ( अयम् ) मे परिजनः ( इदम् ) मे कुलम् ( इदम् ) मे कौलं कृतं ( कर्म्म ) इति बहुविधं लपन्तम् अनवहितजनम् त्रस्तहृदयं शरीरादाकर्षति ॥६॥

अकस्मादायातः अनिश्चितसमयागतः अकरुणतरः न करुणा दया यस्मिन् स अकरुणः अतिशयितोऽकरुणः अकरुणतरः दयाहीनः कालपुरुषः काल एवपुरुषः अथवा कालस्य यमस्य पुरुषः

दूत इतिकालपुरुषः ( इदम् ) मे मम धनं सम्पत्तिः ( इदम् ) मे मम धान्यं व्रीह्यादि ( इदं ) मे मम शयनं शेरतेऽस्मिन्निति शयनं शय्या ( इदं ) मे ममाशनम् अश्यते भुज्यते यत्तदशनं भोजनम् ( अयं ) मे मम परिजनः कुटुम्बः ( इदं ) मे मम कुलं वंशः ( इदम् ) मे मम कौलं कुलादागतं कृतं कर्म्म कुलाचार इत्यर्थः इति इदम् बहुविधं बह्वी विधा प्रकारो यस्य तद्बहुविधं पूर्व्वोक्तवाक्यजातं लपन्तं ब्रुवन्तम् अनवहितजनम् अवधानशून्यपुरुषं त्रस्तहृदयम् उद्विग्नमानसं शरीरादाकर्षति निःसारयति ॥ ६ ॥

प्रभातादारभ्य प्रतिदिवसमस्वस्थहृदयै-
र्भवद्भिश्चिन्त्यन्ते धरणिधनधामानि पशवः ।
प्रियाः पुत्रा मित्राण्यनवरतमास्वापसमयं
कदाचित्स्वप्नेऽपि स्मृतिविषयतां नैति भगवान् ॥७॥

अस्वस्थहृदयैः भवद्भिः प्रभातादारभ्य प्रतिदिवसम् अनवरतं धरणिधनधामानि पशवः प्रियाः पुत्रा मित्राणि आस्वापसमयं चिन्त्यन्ते कदाचित्स्वप्नेऽपि भगवान् स्मृतिविषयतां नैति ॥ ७ ॥

अस्वस्थहृदयैः स्वस्मिन् तिष्ठतीति स्वस्थः नस्वस्थः अस्वस्थः स हृदयो मनो येषान्ते अस्वस्थहृदया उद्विग्नमानसास्तैः भवद्भिः प्रभातात् प्रातःकालात् आरभ्य आरम्भं कृत्वा प्रतिदिवसं प्रतिदिनम् अनवरतं निरन्तर धरणिधनधामानि धरणिर्भूमिश्च धनञ्च धाम गृहञ्चेति धरणिधनधामानि पशवः अविशेषेण पश्यन्तीति पशवः चतुष्पदाः प्रीयन्ते प्रीतिं कुर्वन्ति यास्ताः प्रियाः स्त्रियः पुत्राः पुन्नामनरकात्त्रायन्ते ये ते पुत्राः मित्राणि सखायः आस्वापसमयं स्वापस्य निद्रायाः समयः कालः

इति स्वापसमयः तस्मात्स्वापसमयादभिव्याप्येति आस्वापसमयं निद्राकालपर्य्यन्तम् यथास्यात्तथा चिन्त्यन्ते ध्यायन्ते कदाचित् कस्मिन् काले कदा कदा एव कदाचित् स्वप्नेऽपि निद्रायामपि भगवान् "ऐश्वर्य्यस्य समग्रस्य धर्म्मस्य यशसः श्रियः। वैराग्यस्याथमोक्षस्य षण्णां भग इतीङ्गना" समग्रस्येतिप्रत्येकं सम्बन्धः मोक्षस्येति मोक्षसाधनज्ञानस्य। इङ्गना संज्ञा। एतादृशं समग्रमैश्वर्य्यादिकं नित्यमप्रतिबद्धं यत्र वर्त्तते स भगवान्। नित्ययोगेमतुप्। तथा "उत्पत्तिञ्च विनाशञ्च भूतानामागतिं गतिम्। वेत्तिविद्यामविद्याञ्च स वाच्यो भगवानिति"। अत्र भूतानामिति प्रत्येकं सम्बध्यते। उत्पत्तिविनाशशब्दौ तत्कारणस्योपलक्षकौ। आगतिगती आगामिन्यौ सम्पदापदौ। एतादृशभगवच्छब्दवाच्यः स्मृतिविषयतां स्मरणं स्मृतिः ज्ञानविशेषः तस्या विषय इति स्मृतिविषयः तस्यभावः स्मृतिविषयता तां नैति न प्राप्नोति अर्थात् धरणिधनधामाद्यासक्तचित्तस्य तव हृदि भगवतः सृष्टिस्थितिप्रलयकृतः करुणासागरस्य स्मरणं स्वप्नेऽपि न भवति कथमैहिकसुखसाधिका त्वत्प्रवृत्तिः सफला भविष्यति ऐहिकमपि सुखं भगवत्स्मरणमन्तरेण भवितुन्नार्हतीतिभावः॥ ७॥

य एते दृश्यन्ते सकलविषयास्तेऽप्यविषयाः
भविष्यन्ति प्राणोत्क्रमणसमये पूरुषदृशः।
गृहित्वा पाथेयं सुकृतिकुकृती याति पुरुषो
महत्यां यात्रायां तत इह निषेव्यासुभकृतिः॥ ८॥

(हेजनाः) य एते सकलविषया दृश्यन्ते ते प्राणोत्क्रमणसमये पूरुषदृशः (पुरुषदृष्टेः) अविषया भविष्यन्ति पुरुषो महत्यां यात्रायां सुकृतिकुकृती पाथेयं

गृहित्वा याति ततः (तस्मात्कारणात्) इह (अस्मिन् संसारे) शुभकृतिर्निषेव्या ॥ ८ ॥

हे जना य एते सकलविषयाः समस्तशब्दस्पर्शादयो विषयाः दृश्यन्ते अवलोक्यन्ते युष्माभिरितिशेषः ते शब्दादयोविषयाः प्राणोत्क्रमणसमये प्राणस्य हृदयस्थवायोरुत्क्रमणम् शरीराद्बहिर्निःसरणमितिप्राणोत्क्रमणं तस्य समयः काल इति प्राणोत्क्रमणसमयस्तस्मिन् पूरुषदृशः पुरुषाणां जनानां दृक् दृष्टिरिति पूरुषदृक् तस्या मानवनेत्रस्य अविषया अगोचरा भविष्यन्ति पुरुषः पुरि शरीरे अन्तःकरणे वा शेते यः स पुरुषः जीवात्मा (अस्यैव पर्य्यायः पूरुषः) महत्यां यात्रायां शरीरादन्यत्र गमने सुकृतिकुकृती सुकृतिश्च कुकृतिश्च सुकृतिकुकृती शुभाशुभकर्म्म तद्रूपं पाथेयं मार्गसाधनं गृहित्वा याति गच्छति नान्यान् स्वार्जितगन्धादिविषयान् भूमिनिक्षिप्तधनादीनिच गृहित्वा गन्तुं शक्नोतीतिभावः ततः तस्मात्कारणात् इहास्मिन् संसारे शुभकृतिः शुभकर्म्म निषेव्या कर्त्तव्या युष्माभिरिति शेषः या युष्माकं परलोकमार्गे शरणं स्यादिति भावः ॥८॥

प्रवृत्तिः सर्व्वेषां भवति सुखसिद्ध्यै तनुभृतां
समालोच्यं सूक्ष्मं नियतमनसा किं सुखमिति ।
प्रसन्नत्वं सत्त्वं प्रभवमनपायं हि मनसः
सुखं दोषापन्नं तदितरसुखं वेद्यमसुखम् ॥ ९ ॥

सर्व्वेषां तनुभृतां सुखसिद्ध्यै प्रवृत्तिर्भवति (अतः) सूक्ष्मं सुखं किमस्ति ? इति नियतमनसा समालोच्यं हि (इतिनिश्चयेन) सत्त्वप्रभवम् अनपायम् (अनश्वरं) मनसः प्रसन्नत्वं सुखं (वेदितव्यम्) तदितरसुखं दोषापन्नं निरुक्तरीत्या वेद्यम् (अतः) तदसुखम्

न तत्सुखमिति ॥ ९ ॥

सर्व्वेषां तनुभृतां तनुं शरीरं बिभ्रतीति तनुभृतस्तेषां सुखसिद्ध्यै सुखम् अनुकूलवेदनीयम् तस्य सिद्धिः प्राप्तिरिति सुखसिद्धिः तस्यै प्रवृत्तिः प्रवर्तनम् भवति किमिति प्रश्ने अतः सूक्ष्मं प्रधानं सुखम् आत्मानुकूलवेदनीयं किमस्ति ? इतीदं नियतमनसा नियतं समाहितं तच्च मनश्चेति नियतमनस्तेन नियतमनसा समाहितचित्तेन समालोच्यं विचार्य्यं हीति निश्चयेन सत्त्वप्रभवं सत्त्वात् सत्त्वगुणात्प्रभव उत्पत्तिर्यस्य तत् सात्त्विकम् अनपायम् अपायो नाशः तद्रहितं मनसः प्रसन्नत्वं प्रसादः सुखमित्युत्तरम् तथाचोक्तं गीतायाम् "अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति। यत्तदग्रे विषमिव परिणामेऽमृतोपमम् । तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७॥ अ. १८ ॥ इतरसुखं मनःप्रसादान्यसुखं दोषापन्नं दोषयुक्तं वेद्यं ज्ञातव्यम् दुःखपरिणामत्वात् तथाचोक्तवान् भगवान् गीतायाम्—विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम्। परिणामे विषमिव तत्सुखं राजसंस्मृतम् ॥ यदग्रे चानुबन्धे च सुखं मोहनमात्मनः निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३८ ॥ ॥ ३९ ॥ अ. १८ ॥ अतः तन्मनःप्रसन्नत्वेतरसुखम् राजसं तामसं च असुखम् न तत्सुखं दुःखबाहुल्यादिति भावः ॥ ९ ॥

यदुत्पत्तौ दुःखं भवति खलु गुप्तौ यत इदं
यतोऽपायेऽप्येतद्भवत कथमेतत्सुखमहो ।
लभन्ते यद्युक्ता निरतिशयितं स्वात्मनि सुखं
तदेवाहुस्तज्ज्ञाः सुखमिति समाधाननिपुणाः ॥१०॥

यदुत्पत्तौ खलु दुःखं भवति यतः (यस्य) गुप्तौ इदम् (दुःखं) भवति यतः (यस्य) अपायेऽपि(नाशेऽपि)एतद्

( दुःखं ) भवति अहो कथमेतत्सुखं वदत (यूयमिति शेषः) युक्ता योगिनः (स्वात्मनि) यन्निरतिशयितं सुखं लभन्ते समाधाननिपुणास्तज्ज्ञास्तदेव सुखमित्याहुः ॥ १० ॥

यदुत्पत्तौ येषां विषयाणामुत्पत्तिर्यदुत्पत्तिः तस्यां खलु–इति निश्चयेन दुःखं यतो यस्य गुप्तौ गोपने रक्षणे इदं दुःखं यतो यस्यापायेऽपि नाशेऽपि एतद्दुःखं भवति। अहो इत्याश्चर्यम् अज्ञानमाहात्म्यम् यद्विषयिणो दुःखमेव सुखं जानन्ति इत्यनुसंदधन्तः पृच्छन्ति कथमेतद्धनं सुखं सुखसाधनमस्तीति यूयं वदत कथयत। नवेतस्योत्तरं गदितुं शक्यते युष्माभिरज्ञाननष्टविवेकबुद्धित्वादतो मत्तस्तथ्यतत्त्वं श्रूयतामित्यत आह लभन्त इति युक्ताः समाहितचित्ताः निरतिशयितमनधिकं स्वस्वरूपे यत्सुखं लभन्ते प्राप्नुवन्ति समाधाननिपुणाः समाधाने समाधौ निपुणाः कुशला इति समाधाननिपुणाः समाधिदक्षा तज्ज्ञाः तद्द आत्मानुभवरूपं सुखं जानन्तीति तज्ज्ञाः तदेव आत्मानुभवमेव सुखमित्याहुः ब्रुवन्ति अन्यत्सर्वमपि विषयसुखं दृष्टमदृष्टञ्च दुःखमेव प्रतिकूलवेदनीयत्वात् परिज्ञातक्लेशादिस्वरूपस्य विवेकिनः तथाचोक्तं भगवता पतञ्जलिना " परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः " इति स्वभावतः सर्वेषां जनानां विषयसुखानुभवकाले तस्मिन् विषयसुखे रागः प्रादुर्भवति रागाच्च सुखमिदम्मे स्थापयतु भगवान् मा नाशयतु इत्याकारकमानसिकसङ्कल्पात्मकरागजकर्म्माशयो वासनाऽपरपर्य्यायो धर्म्माधर्म्मरूपो भवति तस्मादेव कर्म्माशयाज्जन्मादि दुःखं भवति एवं रीत्या परिज्ञातक्लेशस्वरूपस्य विवेकिनो विषयसुखस्यापि परिणामो दुःखमेव भवति "क्लेशमूलः कर्म्माशयो दृष्टादृष्टजन्मवेदनीयः " इत्युक्तत्वात् नत्वविवेकिनां दुःखमूलभूतकर्म्माशयाज्ञानात्। एवं सुखभोगकाले

सुखविरोधित्वेनोपस्थितानि दुःखसाधनानि द्विषतो मे सुखभ्रंशे दुःखं मा भवतु शत्रवश्च मे नश्यन्तु इत्याकारकमानस सङ्कल्पात्मकद्वेपजकर्म्माशयो बोद्धव्यः एवं मोहजकर्म्माशयश्च आभ्यां कर्म्माशयाभ्यामपि जन्मादिदुःखानि भवन्तीति वेदितव्यम्। इत्येषा परिणामदुःखता योगिनमेव क्लिश्नाति नत्वयोगिनम् अयोगिनन्तु परिणामकाल एव विषयसुखं दुःखाकरोतीतिभावः। एवं सर्वेषां जनानां दुःखानुभवकाले तस्मिन् दुःखे द्वेषस्तापापरनामा जायते तस्माच्च दुःख मे नश्यतु इति मनसि मार्ययमानस्य सङ्कल्पात्मकतापजकर्म्माशयो भवति ततश्च जन्मादिदुःखमुत्पद्यते इत्येषा तापदुःखता पूर्वोपरकाले दुःखरूपत्वात्परिणामदुःखतायाः पृथङ्निर्दिष्टा। एवं सुखदुःखानुभवकाले सुखदुःखानुभवजन्यसंस्कारो ज्ञानविशेष उद्भवति ततः सुखदुःखस्मरणमुत्पद्यते ततो रागद्वेषौ ततो धर्म्माधर्म्मरूपकर्म्मसम्पादिका कायिकवाचिकमानसिकचेष्टा ततः पुण्यापुण्यरूप कर्म तदन्तरं सुखदुःखरूपस्तद्विपाकः ततोऽस्य वासना इत्येषा चक्रवत्परिवर्त्तमाना संस्कारदुःखता विवेकवन्त योगिन क्लिश्नाति एव कालत्रयेऽपि दुःखानुविद्धत्वाद्विषयसुखस्य दुःखसमेवेत्युक्त्वा तस्य स्वरूपतोऽपि दुःखतामाह "गुणवृत्तिविरोधाच्चेति" गुणानां सत्त्वादीनां सुखदुःखमोहात्मकानां परस्परविरुद्धस्वभावानां पुरुषभोगप्रयुक्तत्वेन ऽयात्मकमेकं कार्य्यं तैलवर्त्त्यादीनां दीप इव भवति तत्रैकस्य प्राधान्येन व्यपदेशात् सात्त्विकराजसतामसव्यवहारो भवति वस्तुतस्तु तत्र द्वयोरपि सत्त्वात् सर्वं कार्य्यजातं त्रिगुणात्मकमेव तथाचोक्तं भगवता पार्थसारथिना "न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः" इति एवं सुखोपभोगरूपोऽपि प्रत्यय उद्भतसत्त्वकार्य्येऽप्यनुद्भूतरजस्तमः

कार्य्यत्वात्त्रिगुणात्मक एव एवं दुःखात्मकत्वं विषादात्मकत्वञ्च तस्य निश्चेतव्यम् अतो दुःखमेव सर्वं विवेकिनः सत्त्वपुरुषान्यताबोधवतः अतः सुखाभावत्वात्मातिरिक्तप्रपञ्चमात्रे सुखार्थं कथं यतते इति निर्गलितार्थः ॥ १० ॥

बहून् क्लेशान् भुक्त्वा मनुजजनुरासाद्य तपसा
व्यतीतेऽसंख्यातेऽधमपशुपतत्रादिजनुषि ।
पुनः पातुं मातुस्स्तनमिह भवन्तो नरमृगाः
प्रवृत्ता दुर्वृत्ताः कथयत किमेतद्व्यवसितम् ॥११॥

हेदुर्वृत्ता नरमृगाः । भवन्तः असंख्याते अधमपशुपतत्रादिजनुषि व्यतीते तपसा मनुजजनुरासाद्य ( तत्र मनुष्यजन्मनि ) बहून् क्लेशान् भुक्त्वा पुनरिह ( अस्मिन् संसारे ) मातुस्स्तनं पातुं प्रवृत्ताः ( सन्ति ) एतद्व्यवसितं किम् ( इति ) कथयत ( यूयमितिशेषः ) ॥ ११ ॥

रेदुर्वृत्ता नरमृगाः दुष्टं वृत्त वर्त्तनं येषान्ते दुर्वृत्ताः पापाचाराः तत्सम्बुद्धौ नरा मृगा इवेति नरमृगा तत्सम्बुद्धौ आकारमात्रेण नरा वृत्त्या तु मृगाः ज्ञानहीनत्वात् "ज्ञानेन हीनः पशुभिः समानः" इत्युक्तेः भवन्तःअसंख्याते अपरिमिते अधमपशुपतत्रादिजनुषि पशवश्च पतत्राणि पक्षा विद्यन्ते येषान्ते पतत्राः पक्षिणश्चेति पशुपतत्राः ते आद्यो येषान्ते पशुपतत्रादयः अधमा निकृष्टाश्च ते पशुपतत्रादयश्चेति अधमपशुपतत्रादयः तेषां जनुर्जन्मेति अधमपशुपतत्रादिजनुः तस्मिन् व्यतीते विगते सति तपसा कृच्छ्रादिकर्म्मणा मनुजजनुः मनुजानां मनुष्याणां जनुर्जन्मेति मनुजजनुरासाद्य प्राप्य (तत्र मनुष्यजन्मन्यपि) बहून् क्लेशान् दुःखानि

भुक्त्वा अनुभूय पुनरिहास्मिन् संसारे मातुस्स्तनं पातुं मत्ताः सन्ति एतद्व्यवसितं व्यवसायः किम् किमर्थः इति कथयत यूयमितिशेषः ॥ ११ ॥

**य एते मन्यन्ते मनुजमिह कर्त्तारमबुधा-**
**स्तएते सम्भ्रान्ता वितथमतवादाय निपुणाः ।**
**दरिद्रं विद्वांसं श्रमकलितनानोद्यमपरं**
**निरुद्योगं मूर्खं धनिनमलसं पश्यत भुवि ॥ १२ ॥**

य एते अबुधा इहास्मिन् संसारे मनुजं कर्त्तारम् मन्यन्ते वितथमतवादाय निपुणास्ते एते सम्भ्रान्ताः ( कुतः सम्भ्रान्तास्ते इत्यत आह दरिद्रमिति ) भुवि ( पृथिव्यां ) श्रमकलितनानोद्यमपरं विद्वांसं दरिद्रम् अलसं निरुद्योगं मूर्खं धनिनं पश्यत (यूयमितिशेषः) ॥१२॥

य एते अबुधा बुध्यन्ते अवगच्छन्तीति बुधाः पण्डिता न बुधा इत्यबुधा मूर्खा इहास्मिन् संसारे मनुजं मनुष्यं कर्त्तारं स्वतन्त्रत्वेन कार्य्यसम्पादकं मन्यन्ते नहि "अधिष्ठानं तथा कर्त्ता करणं च पृथग्विधं । विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४ ॥ शरीरवाङ्मनोभिर्यत् कर्म्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥अ० १८॥ इति भगवदुक्तं कार्य्यसम्पादकमवगच्छन्तीतिभावः । वितथमतवादाय वितथं च तन्मतञ्चेति वितथमतं मिथ्यासिद्धान्तं तस्य वाद इति वितथमतवादः तस्मै निपुणाः कुशलास्त एते सम्भ्रान्ताः मिथ्यामतिमन्तः सन्ति । कुतः सम्भ्रान्तास्त इति शिष्यजिज्ञासाऽनन्तरमुत्तरयन्ति दरिद्रमित्यादिना—भुवि पृथिव्यां श्रमकलितनानोद्यमपरं नाना अनेके च ते उद्यमा व्यापारा इति नानोद्यमा श्रमेणपरिश्र-

मेण कलिताः सम्पादिता इतिश्रमकलिताः ते च नानोद्यमाश्चेति श्रमकलितनानोद्यमाः ते परा प्रधानानि यस्य स तम् विद्वांसं वेत्ति जानन्ति लौकिकालौकिकव्यवहारमिति विद्वान् तं दरिद्रं निर्धनं पश्यत अवलोकयत अलसम् आलस्ययुक्तं निरुद्योगम् उद्योगः व्यापारः तद्रहितं मूर्खं धनिनं धनवन्तं पश्यत यूयमिति शेषः अर्थात् मनुजकर्तृत्वेन सर्वं सम्भवति चेत् तर्हि सर्वे बुद्धिमन्तः श्रमजीविन एव धनवन्तः स्युः बुद्धिहीना निरुद्योगाश्च निर्धनाः स्युः परन्तु लोके तद्विपरीतदर्शनेनानुमीयतां स्वेतरः कश्चित् कर्ता यो बिभर्ति विश्वम् अनादिचित्रशककर्म्मानुगुण्येन। स परमेश्वरः सर्वनियन्ता सर्वसाक्षीति राद्धान्तम् "अन्तः प्रविष्टशास्ता जनानां सर्वात्मा" तै० आ० ३–११–१–"य आत्मनि तिष्ठन्नात्मनोऽन्तरोयमात्मानं वेद यस्य आत्मा शरीरं य आत्मानमन्तरो यमति स त आत्माऽन्तर्याम्यमृतः" बृ०-५-७-२२। सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च" गी० १५-१५-। ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया" गी० १८–६१ ॥ परात्तु तच्छ्रुतेः" ब० सू० २।३।४। इत्यादिश्रुतिस्मृतिसूत्रसिद्धं जानन्तु भवन्तः नहि मनुष्यः स्वतन्त्रः कर्ता परतन्त्रत्वादिति भावः॥ १२॥

भवन्तश्चिन्ताभिर्व्यथितहृदयाम्लानवदना
कुतो भाव्यं भाव्यं किमु च किमु भाव्यं न भवति।
कृतायां चिन्तायां वदत फलमाप्यं किमथवा
समाधाय स्वान्तं कृतफलरसं संपिवत भोः॥ १३॥

हे भवन्तः (यूयं) कुतः चिन्ताभिर्व्यथितहृदया म्लानवदना (भवथ) अभाव्यं किमु भाव्यं भवति किमु

च भाव्यं न भवति अथवा कृतायां चिन्तायां किमाप्यं फलं भवति (न भवतीत्यर्थः) (अतः) भोःजनाः (यूयं) स्वान्तं समाधाय कृतफलरसं संपिबत ॥ १३ ॥

हे भवन्तः यूयं कुतः कस्मात्कारणात् चिन्ताभिर्व्यथितहृदया व्यथितं दुःखितं हृदयं मनो येषां ते व्यथितहृदया अतः म्लानवदना म्लानमप्रसन्नं वदनं मुखं येषां ते म्लानवदनाः भवथ इति शेषः! अभाव्यं भवनानर्हं किमु भाव्यं भवनार्हं भवति? न भवतीत्यर्थः किमु च भाव्यं भवनार्हं न भवति ? भवत्येवेत्यर्थः अथवा पूर्वोक्तकोटीद्वयं विचारेणालम् कथञ्चित्पुरुषार्थबलेनासम्भवोऽपि सम्भवो भवतु तथापि किं कृतायां चिन्तायां फलम् आप्यं प्रापणार्हं भवति नहि चिन्तयाभीष्टं फलं प्राप्नुवन्ति किन्तु चिन्ताजन्यक्लेशमेवानुभवन्ति अतः भो जनाः पदार्थ विचारेण जगदन्तरात्मनि स्वान्तं मानसं समाधाय परमात्मनि समाहितं कृत्वा कृतफलरसम् अकारीति कृतं कर्म्म तस्य फलं विपाक इति कृतफलं तस्य रसस्तं संपिबत कर्मफलास्वादनं कुरुत तत्तच्छरीरभोगजनकप्रारब्धकर्मणां भोगादेवक्षयो नतूपायान्तरेण "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इतिस्मृतिवचनात् प्रारब्धेतरकर्म्मणान्तु प्रायश्चित्तादिना नाशो वेदितव्यः अतः निरुद्विग्नमनसो भूत्वा स्वप्रारब्धकर्म्मणां फलं भुञ्जाना भगवदाराधनं कुरुतेतिभावः ॥ १३ ॥

स्थितिः पुण्यस्थानेऽमृतमशनमाशासुवसनं
कृतिस्तीर्थस्नानं पशुपतिपदाम्भोरुहरुचिः ।
गतिः स्वात्मायत्ता, मतिरखिलवृत्त्या विरहिता ॥
भवत्यानन्दाय प्रचुरतपसां शुद्धमनसाम् ॥ १४ ॥

प्रचुरतपसां शुद्धमनसां पुण्यस्थाने स्थितिः (भवति) एवम् अमृतम् (अयाचितम्) अशनम्, आशा ( दिशा ) सुवसनं तीर्थस्नानं कृतिः ( कर्म ) पशुपतिपदाम्भोरुहरुचिः स्वात्मायत्तागतिः अखिलवृत्त्या विरहिता मतिः ( इत्येते ) आनन्दाय भवन्ति ॥ १४ ॥

प्रचुरतपसां प्रचुरं बहुलं तपो द्वन्द्वसहनं येषां ते प्रचुर तपसस्तेषां पूर्वोक्तलक्षणस्य तपसः सत्त्वगुणावरकरजोगुणतमोगुणरूपाशुद्धिक्षयहेतुत्वात् तपस्विनामेवाशुद्ध्यावरणमलापगमादन्तःकरणशुद्धिर्भवति तथाचोक्तं भगवता पतञ्जलिना "कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः" इति । अत एव प्रचुरतपसां समनन्तरमुक्तं शुद्धमनसामिति शुद्धं मलरहितं मनोऽन्तःकरणं येषां ते शुद्धमनसस्तेषां पुण्यस्थाने पुण्यं धर्मरूपपुण्यजनकम् अथवा मनोहरं तिष्ठति उपविशति यत्र तत्स्थानम् अधिकरणे ल्युट् पुण्यं च तत्स्थानञ्चेति पुण्यस्थानं तस्मिन् स्थितिर्निवासः अमृतमशनम् अयाचितभोजनम् "अमृतं स्यादयाचितम्" इति मनूक्तेः । आशा दिशा सुवसनं शोभनवस्त्रं तीर्थस्नानं जन्मादिदुःखसागरात् तारयति यत्तत्तीर्थं ज्ञानं तेन तीर्थेन ज्ञानसलिलेन स्नानं भूयोभूयो मननिदिध्यासनाभ्यामज्ञानतमोनिरसनरूपमन्तर्मलविशोधनं तदेव कृतिः कर्म्म अथवा तरत्यनेनेति तीर्थं तस्मिन् तीर्थे ऋषिसेवितगङ्गादिपुण्यसलिले स्नानं तद्रूपा कृतिः कर्म्म पशुपतिपदाम्भोरुहरुचिः पश्यति सर्वं जानातीति पशुर्नन्दी तस्य पतिः स्वामी नन्दीश्वरः शिवः तस्य पदे अङ्घ्री इति पशुपतिपदे तदेवाम्भोरुहम् कमलम् इति पशुपतिपदाम्भोरुहम् तस्मिन् रुचिः प्रीतिः स्वात्मायत्ता गतिः स्वस्य आत्मा मन इति स्वात्मा तस्य आयत्ता अधीनेति स्वात्मायत्ता गतिः गमनं स्वच्छन्दगामित्वमित्यर्थः ।

अखिलवृत्त्या अखिलाचासौ वृत्तिश्चेत्यखिलवृत्तिस्तया समस्तान्तःकरणवृत्त्या अहंसुखी अहं दुःखी अहं कृशः, अहं तनुरित्याकारिकया विरहिता शून्या मतिः बुद्धिरित्येते पुण्यस्थानस्थित्यादयः पुण्यस्थानस्थित्यादिमतामानन्दाय स्वस्वरूपानुभवाय भवन्ति नान्येषां तपोरहितानां मलिनमनसामपुण्यकर्म्मणाम् । अतोमुमुक्षुभिस्तपःपूर्विकाम्मनश्शुद्धिमासाद्य पुण्यस्थानस्थित्यादिसम्पत्तये यतितव्यं सा लब्धव्याचेतिभावः ॥१४॥

जगन्मिथ्या मिथ्या श्रुतिशिखरसिद्धान्तवचनात्
तथा सत्यः सत्यः शिव इति च निर्णीय निपुणम् ।
शिवं सत्यानन्दं भजत करुणापूर्णहृदयं
समापन्ने मृत्यौ शरणमिह कश्चिन्न भविता ॥ १५ ॥

इहास्मिन् संसारे मृत्यौ समापन्ने ( सति ) कश्चित् शरणं ( रक्षिता ) न भविता ( अतः ) श्रुतिशिखरसिद्धान्तवचनात् जगत् मिथ्या २ तथा शिवः सत्यः सत्यः इति च निपुणं (यथास्यात्तथा) निर्णीय निपुणं करुणापूर्णहृदयं सत्यानन्दं शिवं भजत ( यूयमितिशेषः ) ॥ १५ ॥

इहास्मिन् संसारे मृत्यौ मरणे समापन्ने समुपस्थिते सति कश्चिच्छरणं रक्षिता न भविता न भविष्यतीत्यर्थः । शरणं गृहरक्षित्रोरित्यमरः । अतः श्रुतिशिखरसिद्धान्तवचनात् श्रुतीनां वेदानां शिखराणि शिरांसि शिरोभूतोपनिषदः तासां सिद्धान्तं राद्धान्तमिति श्रुतिशिखरसिद्धान्तं तस्य वचनम् प्रमाणमिति श्रुतिशिखरसिद्धान्तवचनम् तस्मात् "नेह नानाऽस्ति किञ्चन । मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति । वाचारम्भणं विकारो

नामधेयं मृत्तिकेत्येव सत्यमित्यादिप्रमाणात् जगत् संसारो मिथ्या मिथ्या वीप्सायां द्वित्वम् निरतिशयमिथ्येति यावत् मिथ्यात्वनाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्त्यत्वम् यथा रज्ज्वाद्यधिष्ठानसर्पादेः निर्विशेषचिन्मात्रवपुषि सत्ये ब्रह्मणि स्वरूपतिरोधानविविधविक्षेपकर्य्या सदसदनिर्वचनीययाऽनाद्यविद्यया देवतिर्यङ्मनुष्यस्थावरादिभेदमिदं सर्वं जगत् यथावस्थितब्रह्मस्वरूपावबोधबाध्यं मिथ्यारूपं निपुणं यथास्यात्तथा निर्णीय निर्णयं कृत्वा तथा " सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं । सत्यं ज्ञानमनन्तं ब्रह्म " । इत्यादिप्रमाणात् शिवः उमापतिः सत्यः सत्यः अत्रापि वीप्सायां द्वित्वं ज्ञानघनत्वात्सर्वगतत्वात्सर्वकारणत्वात्त्रिकालाबाध्य इति च निपुणं सम्यक् यथास्यात्तथा निर्णीय निर्णयं कृत्वा अथवा निपुणमितिशिवस्यविशेषणं तथा च निपुणं सृष्टिस्थितिप्रलयकर्म्मणि प्रवीणं करुणापूर्णहृदयं करुणया दयया पूर्णं हृदयं यस्य स करुणापूर्णहृदयो दयापरिपूर्णमानसस्तं सत्यानन्दं सत्यः त्रिकालाबाध्यः सचासौ आनन्दःसुखस्वरूपश्चेति सत्यानन्दस्तम् अथवा सत्यं सत्यनारायणस्य ग्रन्थस्य कर्त्तारमानन्दयतीतिसत्यानन्दस्तं नाम्न एकदेशग्रहणेन नामामात्रस्य ग्रहणमितिन्यायात् व्यासः वेदव्यासः भीमः भीमसेनःइतिवद्बोध्यम् । शिवं सच्चिदानन्दस्वरूपमुमानायकं गङ्गाधरं भक्तवत्सलं भजत सेवध्वं यूयमितिशेषः अथवा शिवं निर्विशेषंब्रह्म " अदृष्टमव्यवहार्य्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः " इतिश्रुतेः तद्भजत स्वात्मत्वेनानुभवतेति भावो वेदितव्यः ॥ १५ ॥

एषा पञ्चदशीनाम्नी कृतिर्वैराग्यवर्द्धिनी।
हृद्या हृदय आधेया सादरं श्रवणादिभिः॥ १६॥

(हेजनाः) पञ्चदशी नाम्नी एषा कृतिःहृद्या वैराग्य वर्द्धिनी (अतः)हृदये श्रवणादिभिःसादरं (यथास्यात्तथा) आधेया धारयितव्या (युष्माभिरितिशेषः)॥ १६॥

हेजनाः पञ्चदशीनाम्नी पञ्चदशी नाम संज्ञा यस्याः सा एषा कृतिः पञ्चदशश्लोकरूपेण सम्पादितोपदेशकदम्बः हृद्या मनोरमा वैराग्यवर्द्धिन्यस्ति विगतश्चासौ रागश्चेति विरागः तस्य भावो वैराग्यम् यतमानव्यतिरेकैकेन्द्रियवशीकारसंज्ञाख्यम् तस्य वर्द्धिनी वृद्धिकरी। तथाच यतमानादीनां विवेकः श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यटीकायां तत्ववैशारद्यां स्फुटतरः। तथाहि। १"रागादयः खलु कषायाश्चित्तवर्तिनस्तैरिन्द्रियाणि यथास्वं विषयेषु प्रवर्त्यन्ते तन्माप्रवर्तिषतेन्द्रियाणि तद्विषयेषु इति तत्परिपाचनायारम्भः प्रयत्नः सा यतमान संज्ञा" अस्यैव वैराग्यस्योपदेशः "यदुत्पन्नं वित्तम्" इत्यादिना भवतीति बोध्यम् प्रतिदिनं स्वादुन्नैः परिपुष्टं शरीरं कृमिशमलभस्माख्यं संभाव्यं तत्कथं सकलभाववर्जितं निर्मलमात्मानं विहाय विनश्वरशरीरं परिपोषितुमहोरात्रं यापयन्तीतिभावः इत्युपदेशेनाद्यवाब्दशतान्ते वा कृम्यादिरूपेण शरीरस्य परिणामनमवश्यमेव भविष्यतीति बोधवतां कायाद्विरागो भवति तथापि अनेकजन्मार्जितवासनासम्वर्द्धितचित्तवृत्तिभीरागादिभिरिन्द्रियाणि यथास्वं विषयेषु प्रवर्त्यन्ते तानीन्द्रियाणि स्वस्वविषयेषु मा प्रवर्त्तन्तामेतदर्थारब्धः प्रयत्नः यद्भविष्यति तद्भवतु परञ्च विषयरसलुब्धः कदापि न भविष्यामि सर्वथा सर्वाणीन्द्रियाणि निरोत्स्यामीति धीरतापूर्वकोत्साहो यत-

मानाख्यं वैराग्यं भवतीतिभावः। इदमेव वैराग्यं स्वयमेव भगवतोपदिष्टम् "यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः। इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञाप्रतिष्ठिता ५८॥ अ० २। यदा स्वस्वविषयोन्मुखानीन्द्रियाणि भवन्ति तदायं तदेतत्संभाव्यं कूर्मिशमलभस्माख्यमधुनेत्युपदेशं गुरूणामुपलब्धवान् जनःकूर्मोऽङ्गानीव सर्वाणीन्द्रियाणि स्वस्वविषयेभ्यः संहरते संहर्त्तुमाकर्ष्टुमारभते तस्येन्द्रियाणां संहर्त्तुः प्रज्ञा विचारबुद्धिरात्मनि प्रतिष्ठिता आत्मतत्त्वविचारस्था भवतीत्युक्तवचनेन बोध्यम् इदमेव वैराग्यमिन्द्रियाणां स्वस्वविषयेषु प्रवृत्तिशक्तिं निरुणद्धि ततः समस्तक्लेशतिमिरविनाशकचित्तवृत्तिनिरोधरूपयोगरविरुदेतीति वेदितव्यम्। २ "तदारम्भेसति केचित्कषायाः पक्वाः पच्यन्ते पक्ष्यन्ते च केचित्तत्र पच्यमाणेभ्यः पक्वानां व्यतिरेकेणाऽवधारणं व्यतिरेकसंज्ञा" अस्यैव वैराग्यस्योपदेशः "गता बालावस्था" इत्यादिना भवतीति बोद्धव्यम् यतमानवैराग्यमारब्धवतां गता बालावस्था तारुण्यमपि गतमतः परं मरणावस्थाऽऽगमिष्यति एतावता कालेन किं कृतं? किं महाकालव्यालग्रसनभयं तव नास्तीत्युपदेशं गतवतामतः परं कतिदिनेषु जीवेयं कतीन्द्रियाण्युपरतानि कति निरोद्धव्यानीति चिन्तया शीघ्रायमाणानामनिरुद्धेन्द्रियनिरोधार्थो यत्नो व्यतिरेकाख्यं वैराग्यं भवतीति भावः इत्थं भगवतार्जुनसखेन स्थितप्रज्ञस्य ज्ञाननिष्ठस्य यतमानवैराग्यसम्पन्नस्य यतमानवैराग्यानर्वाचीनदशारूपं व्यतिरेकवैराग्यमभिहितम् "यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम्। नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता" ५७ अ० २। यः सर्वत्र प्रियेष्वनभिस्नेहः उदासीनः प्रियसंश्लेषविश्लेषरूपं शुभाशुभं प्राप्याभिनन्दनद्वेषरहितः सोऽपि स्थितप्रज्ञः इत्यर्थकेन वचनेनेति बोध्यम्। ३ "इन्द्रियमवस्त-

नाऽसमर्थतया पक्वानामौत्सुक्यमात्रेण मनसि व्यवस्थानमेकेन्द्रियसंज्ञा ” अस्यैव वैराग्यस्योपदेशः “ दुरन्तमत्याशा” इत्यादिना भवतीति वेदितव्यम् । व्यतिरेकाख्यवैराग्यस्य तीव्राभ्यासेन विषयेषु इन्द्रियाणामप्रवर्त्तकत्वेन मानसस्थपक्वकषायसत्त्वे सर्वतो भावेन मनो निरोद्धुमशक्नुवतां रागाभावं विना कोऽपि विषयरसलुब्धो दुरन्तमत्याशावधिं गतवान् किम् ? न गतवान् इति वेदितव्यम् अतो विषयाशां हित्वा तनोः क्षणिकत्वञ्च ज्ञात्वातिशीघ्रं शम्भुशरणमुपगच्छत इत्युपदेशं मासवतां मनस औत्सुक्यमात्रव्यतिरेकेण सकलेन्द्रियोपभोगनिवृत्तिपूर्वकैकेन्द्रियाख्यं वैराग्यं भवतीति भावः उपास्तिर्पुण्याभिरित्यारभ्य कृतफलरसं संपिबत भोरिति पर्यन्तो ग्रन्थः पूर्वोक्तानां वैराग्याणां पोषकः । इत्थं भगवता वासुदेवेन स्थितप्रज्ञस्य ज्ञाननिष्ठस्य व्यतिरेकवैराग्यसम्पन्नस्य व्यतिरेकवैराग्यानर्वाचीनावस्थारूपमेकेन्द्रियवैराग्यमभिधायि “दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥५६॥ अ०२ । इत्यनेनेति वेदितव्यम् ॥

४ “ औत्सुक्यमात्रस्यापि निवृत्तिरूपस्थितेष्वपि दिव्यादिव्यविषयेषु पेक्षाबुद्धिः संज्ञात्रयात्परा वशीकारसंज्ञा ” दिव्यादिव्यविषयोपस्थितावपि मनस औत्सुक्यमात्रस्यापि विनिवृत्तिरूपवशीकारसंज्ञकवैराग्यलाभार्थं करुणया प्रणतशिष्येभ्यः “ स्थितिः पुण्यस्थाने” इत्यादिनोपदिष्टं ग्रन्थकारैः अर्थात् एकेन्द्रियसंज्ञकवैराग्यवद्भिः वशीकारसंज्ञकवैराग्यसिद्ध्यर्थं सर्वाणि राजसतामसस्थानानि विहाय पुण्यस्थाने काश्यादौ निर्जनस्थाने वा स्थितिः कर्त्तव्या मधुराम्लादिरसानेव भोक्ष्ये तदर्थं यतिष्ये चेति मतिमुपेक्ष्य प्रारब्धवशादयाचितं कदन्नं स्वन्नं वा यत्किञ्चि

त्त्वां प्राप्स्यति तेनैव शरीरयात्रा विधातव्या तथाच दिगम्बरो भूत्वा पूर्वसंस्कारवशात् स्नानमात्रकर्म्म कर्त्तव्यं सकलवासनाक्षयार्थं पशुपतिपदाम्भोरुहरुचिः कर्त्तव्या तया विना सकलवासनानिवृत्तिर्नभवतीतिभावः तत्कृपयैव सर्वं भवतीति वेदितव्यं तथाचोक्तं विष्णुपुराणे "यथाग्निरुद्धतशिखः कक्षं दहति सानिलः ।। तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम्" ॥ ततोऽखिलवृत्तिविरहितमतिरूपवशीकारसंज्ञकवैराग्यं भविष्यति तेनैव स्वात्मायत्तां गतिं प्राप्य सच्चिदानन्दरूपमात्मानमनुसंधत्स्वेत्युपदेशवर्त्ता वशीकारसंज्ञकवैराग्यम्भवतीतिभावः । तथाचाह सूत्रयद्भगवान् पतञ्जलिः "दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्" स्त्रियोऽन्नं पानमैश्वर्यमित्यादयो दृष्टा विषयाः स्वर्गो विदेहता प्रकृतिलय इत्यादयो आनुश्रविका विषयाः तत्रोभयोर्दिव्यादिव्यविषययोर्वितृष्णस्य चित्तस्य विषयदोषदर्शित्वेन हेयोपादेयशून्या वितृष्णता वशीकारसंज्ञा वैराग्यमित्यर्थः । इदमेव वैराग्यं भगवान् देवकीनन्दनः पार्थं प्रत्याह 'प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् । आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते" ॥५५॥अ०२॥ आत्मना मनसा आत्मन्येव स्वस्वरूप एव तुष्टो नान्यत्र तेनात्मतोषेण सर्वान् आब्रह्मस्तम्बपर्य्यन्तान् मनोगतान् कामान् विषयान् यदा प्रकर्षेण जहाति त्यजति तदाजनः स्थितप्रज्ञो ब्रह्मनिष्ठ उच्यते इत्यर्थः नोक्तरचनेनेति। इदमेव वैराग्यं सम्प्रज्ञातसमाधेरन्तरङ्गसाधनम् असम्प्रज्ञातस्य तु बहिरङ्गसाधनम् तस्यान्तरङ्गसाधनन्तु परं वैराग्यं तथाचाह सूत्रयद्भगवान् पतञ्जलिः "तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" सम्प्रज्ञातसमाधिपाटवेन गुणत्रयात्मकप्रधानान्महतः पृथग्भूतस्य पुरुषस्य ख्यातेः ज्ञानात् पुरुषसत्ता-

सर्वोद्भवति ततः समस्तगुणलयव्यवहारेषु वैतृष्ण्यं यद्भवति तत्परं वैराग्यं श्रेष्ठं सम्प्रज्ञातसमाधेः फलभूतं ततः पुरुषः स्वरूपमात्रनिष्ठः कैवल्यपदं प्राप्नोतीतिभावः। इत्थंभूतस्य परापरभेदस्य वैराग्यस्य वर्द्धिनी पञ्चदशीनाम्नी एषा कृतिरस्ति अतो हृदये अन्तःकरणे श्रवणादिभिः गुरोरुपदेशतः सादरम् आदरेण सहितम् अर्थात् श्रद्धया यथा स्यात्तथा आधेया नाना प्रयत्नै धारयितव्या युष्माभिरिति शेषः ॥ १६ ॥

ज्ञानस्योवाच वैराग्यं परां काष्ठां पतञ्जलिः।
वच्म्यहं तत्परं ज्ञानं तदेव परमागतिः ॥ १७ ॥

पतञ्जलिः योगसूत्रेण चित्तमलस्य व्याकरणमहाभाष्येण वाङ्मलस्य चरकसंहितया कायमलस्य चापकर्त्ता ज्ञानस्य दृष्टानुश्रविकविषयदोषदर्शनेन सत्त्वसमुद्रेकविधूततमसि रजःकणकलङ्कसम्पृक्ते चित्तसत्त्वे उत्पद्यमानापरवैराग्येण कदाचिदुत्पद्यमानपुरुषदर्शनस्य परां काष्ठाम् काशतेप्रकाशते इतिकाष्ठा "काशृदीप्तौ" भौवादिकस्तस्मात्कर्त्तरि "हनिकुषीति" क्थनि, षत्वे, ष्टुत्वे, टापिच कृते काष्ठा तां परमप्रकाशकम् अपरवैराग्योद्भूतकाचित्कपुरुषदर्शनाभ्यासविमलवारिधाराविधौतसमस्तरजस्तमोमलत्त्वं चित्तस्यावस्थाविशेषं वैराग्यं परं वैराग्यमुवाच। अर्थात् अपरवैराग्यजन्यकाचित्कपुरुषदर्शनाभ्यासात्समुपलब्धप्रकृतिपुरुषविवेकख्यातिरुपलभ्यते ततः प्रकृति तदवान्तरभूतचतुर्विंशतितत्वानि चोपेक्षमाणस्य जनस्य समुपलब्धपुरुषख्यातिमात्रादखिलगुणेषु चित्तस्य वैतृष्ण्यं परं वैराग्यं भवतीतिभावः। इममेवापरवैराग्योद्भूतकाचित्क-

पुरुषदर्शनाभ्यासमुपदिष्टवान् भगवान् अर्जुनम्प्रति गीतायां। तथा च गीता "यतो यतो निश्चरति मनश्चञ्चलमस्थिरं। ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्॥ २६॥ ६॥ अस्यैवापरवैराग्यजन्यपुरुषदर्शनाभ्यासस्यासम्प्रज्ञातसमाधिरूपं फलमप्युक्तवान् भगवान् "प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम्। उपैतिशान्तरजसं ब्रह्मभूतमकल्मषम्"॥२७॥ ६॥ प्रशान्तमनसम् आत्मनि निश्चलमनसं तस्मादेव हेतोः शान्तरजसं विनष्टरजोगुणं तत एवाकल्मषं तत एव ब्रह्मभूतं स्वस्वरूपेणावस्थितमेनं योगिनमात्मानुभवरूपमुत्तमं निरतिशयं सुखमुपैति हीति निश्चयेनेत्यर्थकेनोक्तवचनेन। तदेतत्सर्वमसूत्रयद्भगवान् पतञ्जलिः "तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्" अपरवैराग्यतः पुरुषख्यातिः पुरुषज्ञानं भवति ततो गुणवैतृष्ण्यं सकलगुणेषु यच्चित्तस्य वैतृष्ण्यं तत्परं वैराग्यम्। पुरुषज्ञानमन्तरेणाशेषगुणेषु चित्तस्य वैतृष्ण्यं कर्तुं नार्हतीति भावः। एतत्सर्वं योगभाष्ये स्पष्टीकृतवान् भगवान् व्यासः। तथाच योगभाष्यम्—"दृष्टानुश्रविकविषयदोषदर्शी विरक्तः पुरुषदर्शनाभ्यासात्तच्छुद्धिप्रविवेकाऽऽप्यायितबुद्धिर्गुणेभ्यो व्यक्ताऽव्यक्तधर्मकेभ्यो विरक्त इति तद्द्वयं वैराग्यं, तत्र यदुत्तरं तज्ज्ञानप्रसादमात्रम्। यस्योदये प्रत्युदितख्यातिरेवं मन्यते, प्राप्तं प्रापणीयं, क्षीणाः क्षेतव्याः क्लेशाः, छिन्नः श्लिष्टपर्वा भवसंक्रमो यस्याऽविच्छेदाज्जनित्वा म्रियते मृत्वा च जायत इति ज्ञानस्यैव परा काष्ठा वैराग्यं, एतस्यैवहि नान्तरीयकं कैवल्यमिति"॥ पा. १।सू. १६॥ तत्र यदुत्तरं तज्ज्ञानप्रसादमात्रम्' तत्रतयोः परापरवैराग्ययोर्मध्ये यदुत्तरं परं वैराग्यं तज्ज्ञानप्रसादमात्रम् प्रसाद एव प्रसादमात्रं ज्ञानस्य स्वस्वरूपावबोधस्य प्रसादमात्रं प्रकाशमात्रं यस्मिन् तत् स्वस्वरूपातिरिक्तदृष्टिराहित्यमित्यर्थः। ज्ञानस्यैव परा

काष्ठा वैराग्यम् एतस्यैव हि नान्तरीयकं कैवल्यमिति" हि यतो ज्ञानस्यैवपरा काष्ठा परमप्रकाशकं वैराग्यं तस्मादेतस्यैव परवैराग्यस्यैव नान्तरीयकं कैवल्यमिति नान्तरीयकमित्यस्येयं साधनप्रक्रिया विनाशब्दार्थकान्तरशब्दात् "गहादिभ्यश्चेति सूत्रेण छे तदन्तेन नशब्दस्य समासे स्वार्थे कनि च कृते नान्तरीयकमिति सिद्धम् अस्यायं प्रस्फुटोऽर्थः यदेतस्यैव परवैराग्यस्यैव अन्तरं विना भवति तदन्तरीयं कैवल्येतरपदार्थः यदेतस्यैव परवैराग्यस्यैव अन्तरं विना न भवति तन्नान्तरीयकं कैवल्यम् अर्थात् परवैराग्य विना कैवल्यं न भवतीतिभावः। तथाचोक्तं कौमुद्यां गहादिभ्यश्चेतिसूत्रस्य तत्त्वबोधिनीव्याख्यायाम् "अन्तरशब्दात्तु गहादित्वाच्छे तदन्तेन नशब्दस्य समासे स्वार्थे कनि च नान्तरीयकम् इति भवति । अविनाभूतमित्यर्थः "तथैव दर्शनाब्जभास्करैः श्रीवाचस्पतिमिश्रैरुक्तं योगभाष्यटीकायाम् " तस्मादेतस्य हि नान्तरीयकम् अविनाभावि कैवल्यमिति" इदमेव भगवतः पतञ्जलिमहर्षेः कथनमिति बोद्धव्यम् ननु केचनाचार्या वैराग्यमेव ज्ञानमाहुः शब्दभेदेऽप्यर्थभेदात्तन्न तथ्यमित्यत आह—वच्म्यह तत्परं ज्ञानमिति तत्प तस्मात्परवैराग्यात्परं श्रेष्ठं ज्ञानं स्वस्वरूपावबोध वच्मि कथयामि ज्ञानस्य सकलप्रसिद्धवैराग्यरूपसाधनलभ्यत्वात् नहि ज्ञानवैराग्ययोः पर्यायवाचकत्वं नच वैराग्यस्य ज्ञानजन्यत्वं ज्ञानस्य साधनत्वेन सकलशास्त्रप्रसिद्धत्वात् तदेव स्वस्वरूपज्ञानमेव परमा उत्कृष्टा गतिः *गम्यते प्राप्यते* वैराग्यादिसाधनैरितिगतिः बाहुलकात्कर्म्मणिक्तिन् सकलप्रयत्नैः प्राप्यमेवेतिभावः अथवा तत्परं तत् वैराग्यं समस्तसाधनेषु परं प्रधानसाधनं यस्य तत्तत्पर शेषः *पूर्ववद्बोद्धव्यः । कृष्णवीजसमाधिलब्धधिषणैः संयोजितैषा कृतिः* कैषा संसृतिवासनाजितधिया व्याख्या कृता मामिका ॥ अस्मा-

च्छ्रीवलभद्रदासविनयः भगवतां सन्निधौ सद्बुद्धया सुविचार्य मूलमखिलम् टीका ततो वीक्ष्यताम् ॥ १ ॥ १७ ॥

इति श्रीमिथिलादेशान्तरगतोद्यानग्रामवास्तव्येन मैथिलेन महात्मना झोपाह्व–श्रीसत्यनारायणशर्म्मणा विरचितोपदेशपञ्चदश्याः नैष्ठिकब्रह्मचारिश्रीवलभद्रदासशर्म्मणा प्रणीता सुबोधिनी टीका समाप्ता ॥

---

उद्यानग्रामवास्तव्यं, श्रोत्रियं ब्रह्मवित्तमम् ।
सत्यनारायणं श्रीलं नत्वा कृत्वा सुबोधिनीम् ॥ १ ॥
श्रीमत्त्रिलोकनाथाय मिश्रोपाह्वाय धीमते ।
विरागी बलभद्रोहं सन्मित्राय समर्पये ॥ २ ॥

# शुद्धाशुद्धपत्रम् ।

| पृष्ठ | पंक्तिः | अशुद्ध | शुद्ध |
|---|---|---|---|
| २ | ४ | सवत्र | सर्वत्र |
| २० | १३ | मान्तरंञ्चेति | मान्तरञ्चेति |
| २१ | १० | यद्धि | चिद्धि |
| २५ | २४ | बुध्वा | बुद्ध्वा |
| २८ | ११ | यता | गता |
| ३७ | ४ | सप | सर्प |
| ४० | १४ | ध्यानाद | ध्यानादि |
| ४१ | २ | च्छ्रि | श्लि |
| ४३ | १० | भवते | भवति |
| ४४ | १३ | जीवेश | जीवेश |
| ४४ | २३ | त्याादति | त्वादिति |
| ४५ | १८ | मित | मिति |
| ४८ | १४ | मनोपि | मानोपि |
| ४८ | २२ | लात्तत | लक्षित |
| ४८ | २७ | पुत्प्यु | पुन्त्यु |
| ४६ | ११ | जाग्रन्निति | जाग्रदिति |
| ४८ | १६ | येवहि | योवहिः |
| ५० | ४ | अद्वन्ध | अद्भुन्ध |
| ५१ | २४ | मिघा | मिथ्या |
| ५१ | २५ | शम् | शतम् |
| ५२ | १३ | असो | असौ |
| ५२ | २४ | शद्धा | शुद्धा |

| पृष्ठ | पंक्तिः | अशुद्ध | शुद्ध |
|---|---|---|---|
| ५३ | १ | सदोज्वल | सदोज्ज्वल |
| ५३ | १० | ,, | ,, |
| ५३ | १० | ,, | ,, |
| ५४ | १६ | मोक्षस्वरप | मोक्षस्वरूप |
| ५६ | २६ | सद् | सदा |
| ६० | २० | क्लिव | क्लीव |
| ६० | २२ | केव — | केवलं |
| ६१ | २० | निरधिष्ठातया | निरधिष्ठानतया |
| ६४ | ५ | केवलं | कैवल्यं |
| ६६ | १० | मनोम्मनि | मनोन्मनि |
| ७० | १० | मात्रणावशि | मात्रेणविशि |
| ७१ | १६ | मित्यर्थ | मित्यर्थः |
| ७५ | १६ | ग्राहाम | ग्राह्यम् |
| ७५ | १७ | व्यपपदेशः | व्यपदेशः |
| ७६ | ११ | पीडामाप्नोति | नपीडामाप्नोति |
| ७७ | १७ | अल्पोप | अल्पोपि |
| ७७ | २१ | निरञ्जन | निरञ्जनः |
| ८४ | ६ | प्राणमित | प्राणयितव्यम् |
| ८५ | १४ | विलक्षण | विलक्षण |
| ८७ | ५ | तमम् | तनम् |
| ८८ | १७ | आदाद्प्रमेयम् | आयाद्प्रमेयम् |
| ८६ | ६ | ह्यशीत्य | ह्यशीत्यम् |
| ९५ | १० | यद्यचि | यद्यपि |
| ९६ | १६ | अद्वया | अद्वयम् |
| १०२ | ६ | निरञ्ज | निरञ्जनम् |

| पृष्ठ | पंक्तिः | अशुद्ध | शुद्ध |
|---|---|---|---|
| १०४ | ११ | नास्त | नास्ति |
| १०६ | १७ | जगद्रप | जगद्रूप |
| १०९ | १७ | शियते | शिष्यते |
| ११० | ८ | त्रिशत् | त्रिंशत् |
| १११ | ७ | पैति | प्रैति |
| ११६ | ४ | कामयममानो, | कामयमानो |
| १२८ | ६ | ५८ | ४८ |
| १२४ | २ | चित्मा | चिन्मा |
| १२७ | २४ | च्छादति | च्छादयति |
| १२८ | १३ | सत्चात | सत्यात् |
| १३० | १६ | समुचितं | समुचितं |
| १३३ | १ | विध्यह्नि | विध्यङ्घ्रि |

## उपदेशपञ्चदश्यां शुद्धाशुद्धपत्रम् ।

| | | | |
|---|---|---|---|
| भूमिकायाम् | | इत्यावेदति | इत्यावेदयति |
| १ | १८ | तत्याद्यमरः | इत्यमरः |
| १ | १८ | स्तनया | तनया |
| १ | २० | पूर्वोक्ताः | पूर्वोक्तः |
| २ | ७ | इत्यनेसहितपद्यस्य | इत्यनेनसहितपद्यस्य |
| २ | १६ | धनं | धन |
| ३ | २ | गर्म्भित | गर्म्भित |
| ३ | ६ | मृत्युनन्तरम् | मृत्यनन्तरम् |
| ४ | ३ | बाल | बाला |
| ४ | २३ | द्रततर | द्रुततरम् |
| ५ | ८ | मृतिस्मरणम् | मृतिर्म्मरणम् |

| पृष्ठ | पंक्तिः | अशुद्ध | शुद्ध |
| --- | --- | --- | --- |
| ५ | २२ | प्रात्याशा | प्रत्याशा |
| ५ | २५ | मात | मात् |
| ५ | ४ | लानि | ग्लानि |
| ८ | १६ | ऐहिक | ऐहिक |
| ९ | २० | गृहित्वा | गृहीत्वा |
| १० | १० | गृहित्वा | गृहीत्वा |
| १० | ११ | गृहित्वा | गृहीत्वा |
| १० | १३ | गृहित्वा | गृहीत्वा |
| १३ | २५ | उद्भत | उद्भूत |
| २० | १८ | न्यायात | न्ययात् |
| २२ | १९ | रध्यं | रथ्यं |
| २२ | २० | सपन्नस्य | सम्पन्नस्य |
| २४ | १७ | अत्मना | आत्मना |
| २५ | १० | पतञ्चलिः | पतञ्जलिः |
| २१ | १५ | कत्तरि | कर्त्तरि |
| २५ | २२ | द्रत | द्रुत |
| २७ | १६ | तत्पं | तत्परं |

